परमपूज्य आगमोद्धारक
आचार्यप्रवरश्रीआनन्दसागरसूरीश्वराः



णमोत्थुणं समणस्स भगवओ महावीरस्स

श्रीआगमोद्धारकसङ्ग्रहे—अङ्कः १०

## आगमोद्धारक—
## आचार्यप्रवरश्रीआनन्दसागरसूरिपुङ्गवविरचितानि

# तात्त्विकप्रश्नोत्तराणि



प्रतिः ५०० — मूल्यम् ७-८-०

वि०स. २०१४

प्रकाशक.
पानाचन्द साकरचन्द मद्रासी
गोपीपुरा
सूरत-W. R.

संशोधक.
परमपूज्य—आगमोद्धारक—आचार्यप्रवर—
श्रीआनन्दसागर—सूरिपुङ्गवपट्टधरः
आचार्यश्रीमाणिक्यसागरसूरिः

# प्रकाशकीय निवेदनम्

अस्मात् ग्रन्थात् कतिपयाः कण्डिकाः उद्धृत्य तासां समुदाय तात्त्विकविमर्शसंज्ञया आगमोद्धारककृति संदोहे निरमायि । अनुपलब्धोऽयं अस्य ग्रन्थस्य संशोधकैः आचार्यश्रीमन्माणिक्यसागरसूरिभिः प्रकाशनकर्मणि तु सहाय्य कृतम् आगमोद्धारकाद्यविनेयपन्यासश्रीविजयसागरगणिवरशिष्यैः श्रीचन्दनसागरगणिभिः । अपरं च किञ्चिद् वरतम्यसमन्विता आगमोद्धारकश्रीवनन्गिलेखि धीरसिकदाससूनुना भाण्यापकशीरालालेन तेन महानुभावेन ऋणीकृता। अस्य सम्पादने याः स्खलनाः जाता मयेषु ताः क्षन्तव्याः शोधनीयाश्च सहृदयैः साक्षरैः । इति प्रार्थयते साकर-चन्द्रात्मज पानाचन्द्र मद्रासी वीरसंवत् २४८४ तमेऽब्दे मौनैकादश्यां सूर्यपुरे ।



मुद्रक वसन्तलाल रामलाल शाह, 'प्रगति मुद्रणालय' बागानिया चकला सूरत
प्रकाशक पानाचन्द साकरचन्द मद्रासी गोपीपुरा, सूरत

व्याकरणतर्कन्यायशास्त्राध्ययनानुकूल्यार्थमागताः ११५६ तमे वर्षे राजनगरे वर्षत्रितयं व्यतीतवन्तस्तत्र भवन्तः श्रीआनन्दसागराः। ततो भावनगरे चातुर्मास कृत्वा पुनरागतवन्तो राजनगरे भवन्तो यत्र विहितभगवतीयोगान् भवतः पदव्या व्यभूषयन् १९६० तमे वर्षे आषाढशुक्लदशम्यां पन्यासश्रीनेमिविजयाः गणिवरा। वर्षान्ते स्वजन्मभूमिं अभूपयन्। ततः १९६२ तमेऽब्दे भावनगरं, १९६३ तमे सूर्यपुरं १९६४ तमे मुम्बापुरीं च महन्मह पूर्वं अवावसन्। अस्या मोहमयीनगर्यां भवत्सदुपदेशनेन स्वर्गस्थ–गुलाबचन्द्रदेवचन्द्रेत्यभिधस्य महाशयस्य सम्मत्या संस्थापिता श्रेष्ठिदेवचन्द्रलालभाइ–जैनपुस्तकोद्धारसस्था, एतत् कार्यवाहकचतुष्टयेन यया लक्षरूप्यकात्मकस्य मूलधनस्य वृद्धिव्ययेन प्रसिद्धिमानीता अनेके ग्रन्था मनीषिमनोमयूर नर्तयन्ति। चातुर्मासे पूर्णतां गते 'अन्तरिक्ष' तीर्थवन्दनाय अगच्छन् भवन्तः स्वशिष्यसमुदायसमेतास्तत्तीर्थगन्तृसघसार्थम्। ततः १९६५ तमेऽब्दे प्रयाणमकुर्वन् येवलां प्रति। ततः १९६६ तमे वर्षे पुनरमण्डयन् निजागमनेन सूर्यपुरं पन्यासा इमे। १९६८ तमे स्तम्भनतीर्थे ततश्चलिता इमे उपस्थितबुद्धयः छाणीग्राम यत्र निजसंसारिकबन्धुः श्रीमणिविजयमुनि पन्यासपदवी प्रापितः प. श्रीसिद्धिविजय ( श्रीविजयसिद्धिसूरि ) द्वारा। १९७० तमेऽब्दे पत्तनपुर प्राप्ताः भवन्तो यत्र न केवलं प्राचीनागमप्रकाशने कटिबद्धा अभवन् वेणीचदसुरचदेत्यभिधस्य श्रेष्ठिनो विज्ञप्त्यात्मकया प्रेरणया, किन्तु समस्थापयन् श्रीआगमोदयसमितिं 'भोयणी'ग्रामे अपर च एभिरागमकामधेनुदोग्धृभिः अनेकाः साधुसाधव्य उपकृता आगमवाचनया यत्प्रभावेण भवद्भ्य आगमोद्धारकेति पदवीं मुदा दत्तवन्तः सर्वेऽपि सार्वा जना। प्रथमा आगमवाचना पचासरपार्श्वनाथा-

मस्य यमुनानाम्नी सुपत्नी आसीत्। सांसारिकसुखमनुभुञ्जाना सा मणीलालाख्यं पुत्ररत्नमादिमं तदनन्तरं १९३१तमे वैक्रमीयाब्दे आषाढमासामावास्यां द्वितीयं तनयतरणिं च अजनयत्, यच्चरित्रप्रणयने प्रयासोऽयम्। अस्य हेमचन्द्रेति नाम निष्पन्नम्। जन्मनोऽष्टसु वर्षेषु व्यतिक्रान्तेषु लेखशालामलङ्कृतवान् चरित्रनायकः।

शैशवादेव जनकोपदेशेन स्वाग्रिमबन्धुमणीलालदीक्षासंगेन च वैराग्यरंगरंगितस्वान्तोऽप्ययं बलात् परिणायितः १९४७तमे वर्षे शान्तिदासतनुजरणछोडदासस्य माणेकनाम्नीं सुतनयां पुत्रवात्सल्यपीडितया निजजनन्या। कष्टेन वत्सरचतुष्टयमतीत्य गृहत्यागतत्पर इव भावाजयन् लीम्बडीग्रामे बहुश्रुतश्रीझवेरसागरगुरवः, किन्तु कौटुम्बिकैः कदर्थितो राजसभासन्तापितश्च भवान् पुनर्गृहस्थाश्रममपचमवान्। कतिपयमासान् कष्टेन निर्वाह्य गृहस्थवेषादिना स्वजनान् सन्तोष्य पित्रनुज्ञापूर्वकं १९४७तमे वर्षे ज्येष्ठशुक्लैकादश्यां करीकृत प्रव्रज्यासाम्राज्यं लीम्बडीग्रामे बहुश्रुतश्रीझवेरसागरगुरुवरसान्निध्ये। तदा आनन्दसागरेति विश्रुतिरजनि। एवं वृत्तान्तं विदित्वा संसारासक्ताः श्वशुराद्याः पुनः नानोपसर्गैर्भवान् उपद्रुतः, परन्तु पूर्वीणपुण्यप्रतापेन पुण्यपितृप्रयत्नेन च शान्तिगतास्ते। चातुर्मासे पूर्णे परलोकमगच्छन् गुरवः श्रीझवेरसागरा येभ्यो विशिष्टविद्याग्रहणे उन्मनसा भवान् आसीत्।

लघुवयसि गुरुविरहखेदनाप्याकुला श्रीमन्त १९४८तमे वर्षे अपावयन् स्वागमनेन राजनगरम्। ततः प्राप प्रतिवर्षं व्याहरन् ग्रामानुग्रामम्। प्रभन्तः अपावयन् १९४९ तमेऽब्दे उदयपुरं, १९५० तमे पालीनगरं, १९५१तमे सामतपुरं, १९५२पेटलाद, १९५३तमे छाणीं, १९५४तमे स्तम्भनतीर्थं, १९५५तमे साणन्दं च।

दिमभृतजिनमन्दिरशोभिते पत्तनपुरे १९७१ तमे, द्वितीया आगमवाचना कपडवाणिज्येऽजनि, तृतीया तु राजनगरे १९७२ तमे चतुर्थी पञ्चमी च सूर्यपुरे १९७३ तमे। अस्मिन् मदीये जन्मनगरे गुलाबभाईबालुभाईनाम्ना नगरश्रेष्ठिनाऽलङ्कृतायां सभायां श्रीमन्मुक्तिविजयगणिवरविनेयरत्नबालब्रह्मचारिश्रीमद्विजयकमलसूरिभिः १९७४ तमेऽब्दे वैशाखशुक्लदशम्यां विभूषिता भवन्त आचार्यपदवीमर्पणेन विविधनगरीयप्रतिष्ठितपुरस्याग्रहानुमोदनपूर्वकम्। आगमसुद्रापणस्य प्रगतिं सिषाधयिषव इमे शुभस्थाः सूर्याः प्रयाता मोहमयीनगरीं मासद्वयान्ते। अनन्तरीयेऽब्दे तु पुनरागताः सूर्यपुरं यत्र जैनानन्दपुस्तकालयं समस्थापयन्। तथा श्रीपद्मविजय–कुमुदविजय–विजयसागर–आनन्दविजयेभ्यो मुनिवरेभ्यो गणिपदम्यवरन्। ततो प्रवराजावनचंदनवलचंदेत्यभिधानेन संघपतिना सार्धमगच्छन् भवन्तः पादलिप्तपुरीं श्रीसिद्धाचलादिवस्य साधाधिराजस्य यात्रानिमित्तम्। तत्रापि प्रारब्धा आगमवाचना १९७६ तमस्य हायनस्य चातुर्मासे। भवदनवद्यधनारमचर्याकर्णितया आगमवाचनालाभकामुका देशान्तरवर्तिनोऽपि व्यज्ञपयन्, अभ्यर्थना श्रीमतो भवतः सौवसावपुरपावनार्थं, क्षेत्रस्पर्शनया अङ्गीकृत्य तेषां विज्ञप्तिं विहारक्रमेण प्रथमं 'रतलाम' नगरमपावयन् १९७७ तमेऽब्दे चमत्कृत्याद्वितीयायाम्। अत्र आगमवाचना षष्ठी प्रारब्धा 'श्रीऋषभदेवजीकेसरीमलजी श्वेताम्बरसंस्था' च संस्थापिता यथाऽपि कतिपय ग्रन्थाः प्रकाशिताः। एतद्वर्षचातुर्मासमकुर्वन् सैलानाराज्ये तन्नगराधिपतिश्रीदिलीपसिंहविज्ञप्तिपुरस्सरम्। सूरीश्वरसदुपदेशसुधारसास्वादनानन्दितचेतसा धर्मजिज्ञासुना नरपतिनाऽमुना जीवाहिंसानिषेधात्मकोऽमारिपट्टो ध्वनितः स्वदेशे मुद्रालेखश्च दत्तः सूरिभ्यः। वर्षान्ते व्यभूषयन् रतलामनगरम्, ततः भोपावर

दिग्भूतजिनमन्दिरशोभित पत्तनपुर १९७१ तमे, द्वितीया आगमवाचना कर्पटवाणिज्येऽजनि, तृतीया तु राजनगर १९७२ तमे चतुर्थी पञ्चमी च सूर्यपुरे १९७३ तमे। अस्मिन् नगरे अन्यनगर गुलाबभाइपालुभाइनाम्ना नगरश्रेष्ठिनाऽलङ्कृतायां सभायां श्रीमन्मुक्तिविजयगणिवरविनयेरत्नपाथसमुद्रपारीश्रीमद्विजयकमलसूरिभिः १९७४ तमेऽब्दे वैशाखशुक्लनवम्यां विभूषिता भवन्त आचार्यपदवीप्रदानेन विविधनगरीप्रतिष्ठितमुख्यतत्त्वानुमोदनपूर्वकम्। आगममुद्रापणस्य प्रगतिलिप्सयेव इमे गुणसूरयः मुम्बय्यां प्रयाता मोहमयीनगरीं मासद्वयान्ते। अनन्तरीयेऽब्दे तु पुनरागता सूर्यपुरं यत्र जैनानन्दपुस्तकालयं समस्थापयन्। तथा श्रीपद्मविजय–कुमुदविजय–विजयसागर–आनन्दविजयेभ्यः मुनिवरेभ्यो गणिपदव्यतरन्। ततः प्रवरीजीवनचन्द्रनवलचन्द्रेत्यभिधानेन संघपतिना सार्धमगच्छन् भवन्तः पादलिप्तपुरीं श्रीसिद्धाचलाख्यस्य नगाधिराजस्य यात्रानिमित्तम्। तत्रापि प्रारब्धा आगमवाचना १९७६ तमस्य हायनस्य चातुर्मासे। भवद्नवद्यवैशारद्यचर्चितचिता आगमवाचनालाभकामुका देशान्तरवर्तिनोऽपि न्यमपयन् मध्यजना श्रीमतो भवत सौवस्वपुरपावनार्थं, क्षेमस्वर्धनया अङ्गीकृत्य तेषां विज्ञप्तिं विहारक्रमेण प्रथमं 'रतलाम' नगरमपावयन् १९७७ तमेऽब्दे चैत्रकृष्णद्वितीयायाम्। अत्र आगमवाचना षष्ठी प्रारब्धा 'श्रीऋषभदेवजीकेसरीमलजी श्वेताम्बरसंस्था' च संस्थापिता यथाऽपि कतिपये ग्रन्थाः प्रकाशिताः। एतद्वर्षचातुर्मासमकुर्वन् सैलानाराज्ये तन्नगराधिपतिश्रीदिलीपसिंहविज्ञप्तिपुरस्सरम्। सूरीश्वरसदुपदेशसुधारसास्वादनानन्दितचेतसा धर्मजिज्ञासुना नरपतिनाऽमुना जीवहिंसानिषेधात्मकोऽमारिपट्टो व्यनिति स्वदेशे मुद्रालेखश्च दत्तः सूरिभ्यः। वर्षान्ते व्यभूषयन् रतलामनगरम्, ततः भोपावर

तीर्थं प्रति प्रयाता यात्राकाम्यया। ततः १९७८ तमेऽब्दे पुनरागताः रतलामम्। वर्षाधिकं यत्र स्थित्वा मालवदेशजीर्णचैत्योद्धारकर्मणि नगरवासिनः प्रोद्युक्तमनसः कृत्वा सम्मेतशिखरयात्रार्थं प्रस्थिताः। १९८० तमेऽब्दे तत आगता कलिकातापुरम्। अत्रापि ज्ञानप्रदीपप्रकाशनपटवोऽमी समस्थापयन् संस्थां जैनसाहित्यस्य हिन्दीभाषान्तरप्रचारार्थं यत्कृते एकत्री कृतानि रूप्यकाणां दशसहस्राणि। १९८१ तमे वर्षे अजीमगञ्जमभूषयन्। ततः सम्मेतशिखरतीर्थस्य यात्रा विधाय १९८२ तमेऽब्दे मरुधरदेशे सादडीनगर निजविहारेण व्यभूषयन्। ततः १९८३तमे उदयपुरं प्रति उदय गताः इमे सूरय, तत केशरीयाजीतीर्थे ध्वजारोपणं कारयित्वा प्रतिनिवृत्ता उदयपुरं। तदनन्तर १९८४ तमेऽब्दे राजनगरं अराजयन्। तत्र नवपदाराधनां पञ्चचत्वारिंशदागमतपआराधनां कारयित्वा १९८५ तमे सवत्सरे श्रीमाणिक्यसागरेभ्य' गणिपन्यासपदवीद्वय श्रीशत्रुंजयतीर्थरक्षणाय उपदेश च प्रदाय तदनु विहृत्य श्रीशत्रुञ्जयतीर्थं यात्रानिमित्तमगच्छन्। तत्र नवपदाराधनां कारयित्वा जामनगरे गताः। तत १९८६तमेऽब्दे सूर्यपुरमागत्य नवपदाराधनां कारयित्वा रत्नसागरविद्याशालां समृद्धां नीत्वा नगीनभाइमञ्छुभाइसाहित्योद्धारसंस्थां स्थापयित्वा च स्तम्भनतीर्थे गताः। ततः १९८७ तमेऽब्दे राजनगरे देशविरत्याराधकसंसदा जैनसाहित्यप्रदर्शन सूरीणामुपदेशेन समजनि। १९८८ तमेऽब्दे मोहमयीनगरीं गत्वा श्रीसिद्धचक्रप्रचारकसस्थामस्थापयन्। १९९० तमे वर्षे मुनिसम्मेलनं सफलमतन्वन्। १९९१तमे हायने जामनगरे अयुः। तत्र धारसीतनुजः श्रेष्ठी पोपटलालः उद्यापनमकरोत् सूरीणामुपदेशेन। तत पादलिप्तपूर्यां १९९२ तमे सवत्सरे गतास्तत्र उपा० श्रीमाणिक्यसागर–उपा० श्रीकुमुदविजय–पन्यासश्रीभक्तिविजय–पन्यास



णमोत्थु णं समणस्स भगवओ म    ीरस्स ।

आगमोद्धारक-आचार्यप्रवर-श्री आनन्दसाग   ूरविरचितानि

# तात्त्विकप्रश्नोत्तराणि

प्रश्न-१- ननु परोक्षाद् भिन्नतया प्रत्यक्षं प्रत्यक्षभिन्नतया परोक्ष वा ? यतो न्यायावतारादिषु 'अपरोक्षतयार्थस्ये' त्याद्युक्ते परोक्षभिन्न प्रत्यक्षमिति, 'अस्पष्ट परोक्ष'-मित्यादि प्रमाणनयतत्त्वालोकालङ्कारादिवचनाच्च प्रत्यक्षभिन्न परोक्षमिति च ज्ञायते इति ।

उ०-सत्य, ये इन्द्रियानिन्द्रि (यजं) याणां ज्ञान विषयापरोक्षतया जायमानत्वाद् व्यावहारिकप्रत्यक्षतयाऽभ्युपयन्ति, ते तस्य व्यवहार्यतामपेक्ष्य तद्भिन्नानामवध्यादिज्ञानानां पारमार्थिकप्रत्यक्षताबोधनाय प्रत्यक्षभिन्न परोक्षमित्याहु । तच्च स्मरणादिरूपमेव। ये तु अवध्यादीनामेवात्ममात्रजन्यत्वान प्रत्यक्षतामभिमन्यन्ते ते मत्यादिप्रत्ययानां व्यवहार्यत्वात् परोक्षभिन्नप्रत्यक्षमित्यादि प्रत्यक्षमन्यदित्याहुरिति सुस्थं सर्वम ।

प्र० - २-ननु श्रीनन्दीसूत्रेऽवग्रहादिनिरूपणाधिकारे नो-इन्द्रियार्थावग्रहादीनामाभिनिबोधिकतामुक्त्वा परोक्षताऽऽम्नायि

शिष्टाचारेण मङ्गले कृते सत्सु विघ्नेषु तेषां नाश स्यात्, असत्सु च दर्शनशुद्ध्यादयो गुणास्तु भवेयुरेव। एवमत्रापि सत्सु दोषेषु शुद्धिरावश्यकेन, तेष्वसत्स्वपि ज्ञानाद्याचारपञ्चकाराधन तु स्यादेव । अत एव कल्पदशकपालने दीयमानं तृतीयौषधज्ञातं वस्तुतश्चरितार्थम्, अप्रायश्चित्तेति पृथक् प्रायश्चित्तदानप्रसङ्गविषयं; न नियतप्रतिदिवसकर्तव्यविषयमिति ।

प्र० ७–ननु शास्त्रेषु आदिमध्यावसानेषु मङ्गलमिष्यते, तेषां त्रयाणां मङ्गलानां फल-अविघ्न शास्त्रार्थपारगमनं तस्यैव स्थैर्यं शिष्यप्रशिष्यादिसन्ततेरविच्छेदश्च क्रमेणेष्यते, तत्रास्ति काचिद् घटना ? यथाकथचिद् प्रवृत्त आम्नाय एष इति चेत् ।

उ०–शृणु, जैनशासने आदावध्येयं व्याख्येयमादरणीय चावश्यकमिति तद्विषयताश्रिता मङ्गलत्रिकयोजना फलेन युता, मङ्गलनदेव यदनिष्टनिवारणेनेष्टसिद्धिं विदधाति, तदुद्देशेनैव योजना, तत्र (१) तदीयमाद्यमध्ययन सामायिकं, तत्र च श्रीतीर्थंकरगणभृतामितिवृत्तानि, तेषां श्रवणादेरवश्य बोधिबीजप्राप्त्यादि, ततश्चावश्यमशेषादृष्टदाहादिभिरनिष्टवारणेष्टप्राप्तिद्वारेण शास्त्रशासितार्थरूपापवर्गो लभ्यत एवार्वाक् पुद्गलावर्त्तात् । ओघेनापि सामायिकवाच्यसमतासेवनेन नापवर्गलाभाद् वञ्च्यते जीवैरिति। (२) मध्यं च निर्युक्तिमानापेक्षया चतुर्विंशतिस्तवस्य निर्युक्तिस्तत्र जिनानां स्तवस्य द्रव्यभावरूपस्य निरूपणं, तेन चाचीर्णेन प्रवृत्तमोक्षमार्गगमनानां स्यादेवाविचलत्वम्। अत एव प्रभावनैषा गण्यते । अध्ययनसङ्ख्यामपेक्ष्य तु मध्यं वन्दनाध्ययनं, तत्रचासाधारणतया गुरूणां महिमा भक्तिश्च वर्ण्यते, तद्वांश्चावश्यं तदुपदेशश्रवणादिभिरारब्धमोक्षमार्गगमने स्थिर स्यात्, सूत्रतोऽपि 'इच्छामि खमासमणो वंदिउ' इत्यनेन वन्दनेऽपि गुर्वाज्ञापेक्षा स्पष्टतयोक्ता, ततश्चैवंविधगुर्वाज्ञावशवर्ती शिष्यो मोक्षाध्वनि स्थिर स्यादेव न तत्राश्चर्यं किञ्चित्. (३) अन्त्यं चाध्ययनं प्रत्याख्यानं, तत्र च समूलोत्तरगुणप्रतिपत्तिरूपाचारप्रवृत्त स्यादेव तीर्थपरम्पराप्रवृत्त्या सन्ततेरव्युच्छेद । 'उग्गए सूरे नमुक्कारसहिंयं' इत्यनेनानुसूर्योद्गमं प्रत्याख्यानाचरणया धार्मिकजनपारम्पर्येणाव्युच्छेदोऽवश्यं शासनस्य, तदनुकरणप्रवृत्तश्च शिष्टाचारो यद् ग्रन्थारम्भे निर्विघ्नशास्त्रसमाप्तये शब्दतोऽर्थतो वा आशीर्नमनानिर्देशान्यतमरूपेण वा परापरं गुरुस्मृत्यादिरूपेणावश्यं मङ्गलं कार्यमिति, अनुकरणे चोद्देशोऽनुकरणीयोद्देशेन सम एव स्यान्न त्वनुकरणीयस्वरूपापात , किंचोक्तानुसारेण मङ्गलत्रिकस्य

प्र० १३–नन्वर्हन्मुनीनामाकारधरत्वात् सद्भावस्थापना चित्रकर्मादिषु सम्भविनी पर ज्ञानस्य सा कथं तथा? इति चेद्।

उ०–ग्रन्थिमादिषु तत्तल्लिप्युल्लेखेन तथा भवन्ती सा तथा तया शक्येत ज्ञातुं, तथा चाक्षरतदाकारयोरैक्य ज्ञातु, सुकरमेव, आकारोऽप्यर्थ इति तुल्याभिधानतायां न शङ्कालेश इति, आकारेणाभिलक्ष्य पदार्थं, ततोऽर्थ पदाकार स्थाप्यानुगत इति पृथग्निर्देशोऽर्थाभिधानेत्यत्रेति।

प्र० १४–ननु नामस्थापनयो स्पष्टे अनाकारेतरत्वे कोऽनयोर्विशेषः? इति, कथं पर्यनुयोग? इति।

उ०–सत्य, नामसद्भावस्थापनयो स्पष्टो विशेष, परमसद्भावस्थापनाया नामकरणमेव विशिष्यते इति प्रश्न स, ननु तत्र नाम प्रायो यावत्कथिक, स्थापना तु तथाऽन्यथा चेति समाधीयते, परमेकत्र प्राय शब्देनान्यत्र विकल्पेन च समाधान साम्यमेवेति। सत्य परावर्त्तेऽपि नाम्नो यावद्द्रव्य पूर्वाभिधानाभिधेयता तिष्ठति, न तु स्थापनाया कस्या अपीति योग्य समाधानं, प्रायिकता च सत्यापि तदवस्थे द्रव्ये नाम्न परावर्त्तादिति। अभिधेयतानाशोऽभिधेयनाशे, तत परावर्त्तेऽनुद्भूते च नाम्नि न तदभिधानविरोध ततो यावद् द्रव्यमिति, स्थापना तु स्थाप्याभिप्रायगता, तथात्वं च शाश्वतेतरस्थापनासु, सा चाकारविशेषरूपेति पूर्वस्थापनायाः परावृत्तावपरोत्पादे च तत्तदाकारवतस्तदा तदा बोध ॥

प्र० १५–ननु ज्ञानाद्यात्मपरिणामो भावमङ्गलतयेष्यते तच्चात्यन्तिकफलस्वरूपं, ज्ञानाद्याश्च प्रतिपातिनोऽपीति कथं तेषां तत्त्वमिति?

उ०–सत्यं, परमेकशो लब्धोऽपि सुदृग्भिरात्मपरिणाम उत्कृष्टतोऽपार्धपुद्गलावर्त्तात् फलत्येव परमफलेनेति तस्य तत्त्वाश्रद्धाने न क्वापि क्षति।

प्र० १६–ननु सामायिकादिषडध्ययनात्मक सूत्रं भगवद्गणधरप्रणीतमन्यथा वा? आद्ये, न कथमङ्गप्रविष्टता तस्य? द्वितीये, गणधराणां तदभावे सप्रतिक्रमणधर्मता कथमिति?

उ०–श्रीआवश्यकनिर्युक्तौ श्रीमद्भिर्भद्रबाहुस्वामिभि स्पष्टतया तस्य भगवदुक्तानुसारिगणधारिरचिततया तन्निर्दिष्टमेवेति गणधराणां सप्रतिक्रमणधर्मत्वे न बाध। तीर्थप्रवृत्तिदिवस एवादौ दैवसिकमिति दैवसिकादीनि प्रतिक्रमणानि। अगप्रविष्टेतर-

स्वतन्त्र ज्ञेय किं ? यदि च सुखदुःखे विषयस्तर्हि किमसज्ञिनो निःसुखदुःखा ? इति।

उ०—सत्यं, द्रव्येन्द्रियाणामेव पुद्गलरूपता न तूपयोगात्मकभावेन्द्रियाणां, आत्मा चोपयोगात्मक इत्यसज्ञिनामपि स्पर्शादिज्ञानं सुखदुःखवेदनं चात्मोपयोगरूप, ततो देहरहितेष्वपि सिद्धेषु सुखानुभव, चिकीर्षादियुतवस्तुस्वरूप देवादिदर्शनं चाननुभूतमेवेन्द्रियैरनुभूयते मनसा, ततश्चिन्त्यो विषयो मनसो गोचर अनिन्द्रियता तु तस्य जीवेन्द्रसृष्ट्यादित्वे सत्यापि बाह्यलिङ्ग न श्रोत्रादे पर्पटिकादिवदिति।

प्र० २०—ननु 'रूव पुण पासई अपुट्ठति' वचनात् 'न चक्षुरनिन्द्रियाभ्यामिति' वचनाच्च न चक्षुषा स्पर्शनरूपव्यञ्जनावग्रह इति सत्यप्यागमे 'सूरिए चक्खुफास हव्वमागच्छई' ति कथं व्यञ्जनावग्रह कथ्यते? इति,

उ०—स्पर्शनस्य सर्वेन्द्रियव्यापित्वार्थं तत्, रसनादिषु व्याप्येव तदिति उद्गते सूर्ये च तत्तापो द्रष्टृचक्षु स्पृशत्येवेति तत्तापस्य शीघ्रगामिता ध्वन्यते। ऊर्ध्वस्थितस्यापि सूर्यस्य तापक्षेत्र एव दृष्टिपथप्राप्ति च तापयति, सर्वेषामुत्तरो मेरु' रित्यपि सूर्यतापदिशमपेक्ष्यैव।

प्र० २१—ननु सर्वा अपि भाषाश्चतुर्भि' समयैर्लोकमापूर्य तदन्तं गच्छन्ति काश्चिदेव वेति ?

उ०—यस्तीव्रप्रयत्नो वक्ता स भाषां निसृजन् भिन्नानि तद्द्रव्याणि निसृजति, तानि चानन्तगुणवृद्ध्या वर्धमानानि महल्लेष्टुखण्डवत् शीघ्र दूर च गमनशीलानीति तानि तथा लोकान्तमाप्नुवन्ति। इतरवक्तृभाषाद्रव्याणि त्वसङ्ख्यातावगाहना गत्वा तत्परिणामं विजहतीति न तथा तमाप्नुवन्तीति।

प्र० २२—ननु मतेरनर्थान्तराणि तत्स्वरूपनिरूपणान्ते किमिति निर्दिष्टानीति ?

उ०—सत्यं, जैने अन्यस्मिन्वा शास्त्रे तानि दृष्ट्वा न पञ्चज्ञानभिन्नत्वं मतिपर्यायान्तरतां च बुध्येत।

प्र० २३—ननु यावच्छद्मस्थतामपायसद्द्रव्यवत्ताभिधीयते तेन सम्यग्दर्शनं चाभिधीयते, मतेरपायसद्द्रव्यता तत्पूर्वकस्यापि तथता सुश्रद्धेया, परं अवधिमन.पर्याययो प्रत्यक्षरूपत्वात् तत्र सा कथमिति ?

तावन्तस्तत्रागुरुलघुपर्याया निश्चयत, परं ते सर्वेऽप्येकामूर्त्तद्रव्यपर्यायसमा न भवन्ति, अतोऽल्पा एव ते।

प्र० २९–ननु अक्षरानन्त्यभागस्य जातिविभागेन निर्देशं कुर्वन्त शास्त्रकारा अनुत्तरानवधीकृत्य पर्यन्ते पृथ्वीकायानुदाहरन्ति, अन्यतः सर्वजघन्य उपयोगो लब्ध्यपर्याप्तकसूक्ष्मनिगोदस्याद्यक्षण एव गीयते(तत् कथम्?) इति।

उ०–सत्य, सर्वजीवापेक्षया तथाविधनिगोदस्याद्यक्षण एव जघन्योपयोगस्थान, परं व्यवहारराशिमपेक्ष्य पृथ्व्या एवादिस्थानं, अत एव योनिसङ्ग्रहे पृथ्व्यादिक एव क्रम, यश्च क्वचिद् बादरनिगोदानां गीयते तत् छेदभेदादिक्रियाव्यवहाररूपं कारणमाश्रित्येति न तेषामव्यवहारिकतानिरासायालम्। द्वीन्द्रियादिभावप्राप्तानां सव्यवहारराशिगतत्वमिति 'जेहि न पत्तो तसाइपरिणामो' इति विशेषणवतीवचनात्, परं तद्वचन सर्वभव्यसिद्धिभवनशङ्काया निरासार्थं, यतो न त्रसादित्वमन्तरा कोऽप्यवाप्नोति सिद्धि सर्वकाल च त्रसादित्वमप्राप्ता अपि भव्या सन्त्यनन्ता इति न भव्यशून्य ससार सर्वभव्यसिद्धिगमश्च, 'सव्वजीवेहिं सुय' इत्यस्य व्याख्यायां विशेषावश्यकेऽपि व्यवहारराशिमागता एव सर्वजीवा इति व्याख्यानात्र सर्वभव्यमुक्तिरित्यपि च।

प्र० ३०–ननु मतिश्रुतयो सर्वजीवव्यापित्वे किमिति अक्षरस्यानन्तभागो नित्योद्घाट सर्वेषामिति गीयते? इति।

उ०–सर्वेषामाहारादिसञ्ज्ञानुगमेन जीवत्वानुगम सा चाक्षरात्मकाभिलाषानुगामिनीति कृत्वा तस्य तथात्वगान (कथन) मनुमीयते, श्रुतसत्त्वे च मतेर्नियतं सत्त्वमिति तथा द्वयोरपि व्यापकतासिद्धिः।

प्र० ३१–ननु सर्वेषामात्मनां मध्याः प्रदेशा कर्मवेष्टनरहिता, एवं तावतांशेन केवलज्योतिष किमिति न सर्वेऽप्यात्मान ?।

उ०–सत्य, सर्वेऽप्यात्मान एकोपयोगस्वभावा, यावच्छाद्मस्थ्य चापायसद्द्रव्यतयैवोपयोग इति न तैरुपयुक्तता, अत एव ज्ञानानां क्षायोपशमिकक्षायिकौ भावौ, न पारिणामिक इति।

प्र० ३२–ननु सञ्ज्ञिश्रुतं दीर्घकालिकहेतुवादिकदृष्टिवादिकसञ्ज्ञिभेदेन त्रिधा पठ्यते, विवरणे तु तेषामसञ्ज्ञिनां दीर्घका-

व्यवहारातिरिक्तानामागमाख्येति चेच्छास्त्रग्रहण, तर्हि तदेवास्तां किमागमेनेति ?

उ०–अभ.वेष्यत्तदानीमाचाराङ्गादीनां पञ्चचत्वारिंशतो वैशेषिक्यागमसञ्ज्ञा, शेषाणां च लोकोत्तरसूत्राणां शास्त्रसञ्ज्ञेत्युभयोर्ग्रह स्यात्, किञ्च–नग्नाद्या शास्त्राणामभ्युपगन्तारो नागमानां, विपर्ययेण तु लुम्पाका इति योग्यमेवैदंयुगीनानामुमयग्रहणम्। अन्यच्च लौकिकवेदसमयशास्त्रसिद्धान्तनिकायाख्योपेतशास्त्राणां शुश्रूषादिगुणाष्टकमावश्यकं यदि तर्हि लोकोत्तरागमशास्त्रग्रहणे तेषामावश्यकता दुर्वारेति स्वन्यते। आगमोच्छेदे तत्स्थानापन्नानि प्रकल्पादिश्रुतरूपाणि शास्त्राणीति त्वन्यदेवेति

प्र० ३७–'नन्वौपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्व' मिति सूत्रादवधेर्जीवस्वतत्त्वता ? क्षयोपशमप्रत्ययता च, सुरनारकत्वयोस्तु न जीवस्वतत्त्वता न च क्षायोपशमिकता किं त्वौदयिकता, तत' प्रत्ययस्तयोर्भवः कथम् ?।

उ०–कर्मणामुदयादयो यथा द्रव्यादिप्रत्ययास्तथैव तेषामुपशमाद्योऽपि, अत एव बादरत्वादीनां संज्ञिपञ्चेन्द्रियनरत्वान्तानां तथारूपाणां मोक्षांगता तत्र तत्र प्रतीता, परं तेषु क्षयोपशमाद्या आन्तरा हेतव', अत्र तु भव आन्तरो हेतुरिति भवप्रत्ययो द्वयोरवधिः, भवस्य चातुर्विध्येऽपि विशेषव्याख्यानात् सुरनारकभवयोरेव तत्र ग्रहणमिति, इदं त्ववधेयं यत् सम्यग्दर्शनादिषु बादरादीनां हेतुत्वेऽपि, तत् विषयादिवैचित्र्येण भावाभावयोर्भावेऽपि न तेषां वैचित्र्यं, सुरनारकभवयोस्तु नियतोऽवधिस्तत्स्थित्यादिवैचित्र्येण नियतवैचित्र्यमिति भव आन्तरो हेतुरिति भवप्रत्ययता तदवधेरिति मुख्यहेतोर्व्यपदेशकारणता सिद्धतमैव यवाङ्कुरादाविति। तत्वत द्वय द्वयो कारणम्।

प्र० ३८–ननु कालस्य द्रव्यतां नाङ्गीकरोति निश्चयनयस्तर्हि कथ द्रव्याणां षट्कमिति ?

उ०–वर्त्तनाद्युपकारक कालं समयरूपमपेक्ष्य द्रव्याणां षट्कमेव, परं स्थित्याद्यर्थं व्यवह्रियमाणः कालो दिवसादिगुणकारभागहारव्यवहार्यो मासाद्यावलिकारूपो न जीवाजीवमयसूर्यबिम्बतत्तदाकाशसम्बद्धात्कालादन्यः इति स न निश्चयेन पृथग्द्रव्यरूप, एनमेवापेक्ष्य 'जीवाश्चैव अजीवाश्चैवे'त्याद्युच्यत इति गदितमिति। गत्याद्यवष्टम्भकधर्माद्यस्तिकायवद्वर्त्तनाद्युपष्टम्भकस्य तु कालस्य न कोऽप्यपलापप्रसङ्ग इति।

मोक्षादिपदार्थान् हेतुवादे भव्याभव्यादीन् स्वाभाविकांश्चाहेतुवादे निक्षिप्य वाच्यार्थद्वैविध्यमाहु । सर्वमपि च प्रज्ञापनीयार्थमयं द्वादशाङ्ग, केवलगम्य शेषम् ।

प्र० ४२–ननु केवलज्ञानस्य सैव केवलता यत्तत् केनापि सहभू-(सहचर)न, यतो न मन पर्यवमवधिर्वा मतिश्रुताभ्यां वियुते, न च ते परस्परमपि मतिश्रुते वियुक्ते इति केवलज्ञानमेवा यैर्ज्ञानैरसहचर, तत एव च केवलज्ञानमिति गीयते। समस्तशुद्धासहायत्वानि तु परमावध्युत्कृष्टचतुर्दशपूर्वविपुलमतिमन पर्यायेष्वप्यपेक्षया भवेयु । एवं च केवलिनां मत्यादिज्ञानानामभाव इतिसिद्ध, तानि च द्व्यादीनि प्रागवश्यभावीनि केवलादिति तेषां किंकृतोऽभाव ? तत्तदावरणानि तु प्राक् क्षयोपशमतामापन्नानि सन्ति,अधुना केवलज्ञाने क्षीणतामापन्नानि ततो निरावरणानां मत्यादीनां केवलिन्यावश्यकसद्भाव आपद्यते।

उ०–एकस्वभावो हि जीव स च चेतनारूप, सा प्राक्केवलादावरणेनाभ्रेणेव चन्द्रज्योत्सनावदाव्रियते सर्वत ,आवृतस्यापि तस्य पूर्णिमानिशीथे साभ्रचन्द्रस्य प्रभावद्या चेतना सा कटाद्यावरणवत् मन पर्यायावरणादिभिराव्रियते,कटाद्यावरणापगमे च तत्प्रतिबद्धप्रभावद् मन पर्यायावरणाद्यपगमे तत्तच्चेतनांशस्याविर्भाव, परं साभ्रकटाद्यावरणापगमे राकानिशीथिनीचन्द्र इव समन पर्यायावरणादिकेवलावरणेऽपगते शुद्धचेतना प्रादुर्भवतीति कथकार तत्तदावरणापगमेऽपि केवलमेकमेव न विभ्राजेतेति।

प्र० ४३–ननु किमिति सम्यक्त्वे एव निसर्गाधिगमौ हेतुतयाऽभिमतौ, न ज्ञाने न च चारित्रे ? इति।

उ०–ज्ञाप्यतेऽनेनेयं मर्यादा–यन्नाधिगममन्तरा लोकोत्तरं श्रुतज्ञानं, न च देशसर्वरूप चारित्र, स्वयंबुद्धप्रत्येकबुद्धत्वे तद्भवे स्वय, केवलात् प्रागष्टप्रवचनमातृज्ञाननियमोऽत एव स चार्थरूप , उद्देशादिक्रमप्राप्त्यनाऽपि श्रुतस्यात एव, अत एव च मरुदेवादीनामार्थ्यमेव शुक्लध्यानमुरीक्रियते प्राक्केवलादिति।

प्र० ४४–ननु 'मूढनइय सुयं कालियं तु न णया समोयरति इहं'ति, आसज्ज उ सोयार णए णयविसारओ बूय' त्ति 'अहिगारो तीहि उ ओसण्ण'ति (आव० नि० ७६०) च यदुद्घुष्यते तत्कतमद्वारमाश्रित्य, यतो लोकोत्तरे शास्त्रीयोपक्रमेषु प्रमाणद्वारे नयसख्यानामद्वार, उपोद्घातनिर्युक्तौ च

उ०-चूर्णिकृद्भिर्धर्मकथया सह जिननामवेदने प्रव्राजन शिक्षण च गृहीत तयोरादिशब्दार्थेना साध्यता च ज्ञेयेति।

प्र० ४७-नन्वाशाम्बरीय तत्त्वार्थसूत्र कथ न? शब्दान्तनयपञ्चकोक्ते।

उ०-सत्यं, शब्दान्तनयपञ्चकनिर्देश स्पष्ट एवावश्यके जैनीयमिति (तत्त्वार्थम्)

प्र० ४८-ननु भगवतामार्यरक्षितसूरीणां प्रव्रज्या प्रथमशिष्यनिष्फेटिकया जातेति निर्विवाद, सा तत्र राजकुलेन लोकेन वाऽनभिमतेति किऽर्वाक् षोडशाद्वयसेति?

उ०-'साहूहिं कहियं जहा एस सड्ढीए भूणगो' त्यावश्यकवचनादूनषोडशत्वेनेति ज्ञायते। द्वाविंशतिवर्षीयास्ते तदेति चेत् मन्येत (तदा) न भ्रूणशब्दवाच्यता कथमप्युपपद्येतेति। न च राजकुलाद्यनभिमतत्व निष्फेटिकाहेतुरिति।

प्र० ४९-ननु 'इतो य वइरसामी दक्खिणावहे विहरति' त्यावश्यकोक्तौ कोऽसौ दक्षिणापथ? इति।

उ०-विदिशाविषयो योऽवन्तीरूप तद्दक्षिणस्यामेडकाख्य तत्परत प्राकोशाम्याटवीसनिवेशादिति निराबाधतया ज्ञायते।

प्र० ५०-ननु जमालिर्यदा विप्रतिपन्नस्तदा तदाश्रिता श्रमणा' कां दशामन्वसार्षुरिति?

उ०-प्राक् वीरमनेके उपसम्पन्ना, सुदर्शनाप्रतियोधे तु तया सह शेषा अपि ये स्थिता, अतो जमालिरेक तया प्रज्ञापयितुमारब्ध इति,प्रारम्भे एव सर्वे उपसपन्ना इति क्वचित्।

प्र० ५१-ननु निह्नवीयमाधाकर्मादि परिहार्यं न वा? साधुभिरिति।

उ०-यद्यप्यबोटिका निह्नवसाधवो निर्ग्रन्थरूपा नतु निर्ग्रन्थास्तथा,तेषामाधाकर्मादि लोकज्ञाते निह्नवभेदे न परिहार्यं, तत्त्वतस्तु निष्पादकश्चेच्छद्मस्थस्तदा न परिहार्यमन्यथा तदज्ञाने तु लोके ज्ञातभेदे अज्ञातभेदेऽपि न परिग्राह्यमिति।

प्र० ५२-ननु आयमाश्रित्य प्रत्याख्यानं, यतः 'आवाए सव्वदव्वाणं' (आव० नि० १९०) त्युच्यते, तत्र सम्यक्त्वस्य सर्वद्रव्यपर्यायगतता स्वीक्रियते, श्रुते च सर्वज्ञत्वाभावान्न सर्व-

समूहरूपतया महाव्रतयानाद्यास्तु साधकताख्या, दर्शनादयस्तु स्वस्थानस्वतन्त्रा, अनुकम्पादयस्तु पारम्परिका हेतवः सहचरा असहचरा अपि, ये तु बालतपसोऽनया गाथया अकामनिर्जराया पार्थक्यमाश्रयन्ति ते तूच्छृखलमतय, तद्गन्धस्याप्यत्राभावादिति, न ह्यनुकम्पादिषु सकामनिर्जराया नियम, इश्या दृष्टान्तास्तदीयास्तै ॥

प्र० ५६–ननु ज्ञानान्तरादिभि कारणै सम्यक्त्वं सातिचारं स्यात् मिथ्यात्व वा स्याद्बाधितं वा सम्यक्त्व निष्ठेदिति ?

उ०–ये हि तथाविधविचिकित्सां धारयन्ति ते न केवल मलिनयति सम्यक्त्व, किन्तु मिथ्यात्वं यान्ति, पुनर्मार्गप्रतिपत्तावेव सम्यक्त्वलाभ', एवविधानाश्रित्यैव च शास्त्रे सम्यक्त्वस्याकर्षा उदिता। ये तु तथाविधप्रसंगे मतिदौर्बल्यादीन् निधाय 'तदेव सत्य'मित्याद्यवधारयन्ति ते त्वविचलामलिनसम्यक्त्वा ज्ञेया। तथा च मतान्तरीयाणामुत्सूत्रप्ररूपणापरायणानामपि सम्यक्त्ववत्ता स्थापनायाऽनेन यतन्ते ते तेभ्योऽपि पापतरा इति दूरीकर्त्तव्या एव त इव शासनादिति ॥

प्र० ५७–ननु सामायिकादीन्यष्टौ नामानि चेत्कथ पृथग्दृष्टान्ता ? दृष्टान्तेष्वभिधेयपार्थक्यादिति।

उ०–एको हि जिनो रागादिप्रतिचिकीर्षुभिर्जिनतया (१), नीरागज्ञानार्थिभि केवलितया (२) सर्वद्रव्यादिज्ञानार्थिभिः सर्वज्ञतया (३) शासन विवर्धिषुभिरर्हत्तया (४) मुमुक्षुभिस्तीर्थकरतया (५) एव नानाभिप्रायवद्भिर्नानाभिधेयतयाराध्यते, तथापि तथातथाभावेन तस्यैव प्राप्तिरिति दर्शनाय दृष्टान्तपार्थक्यमर्थपार्थक्य चेति। एवमेव सम्यग्दर्शनज्ञानपर्यायेष्वनुक्तमप्यूहितु शक्यमिति।

प्र० ५८–ननु (१) जिज्ञासा (२) सशय (३) शंका (४) प्रश्न (५) कांक्षाणां को विशेष ? (६) ज्ञानान्तरादिभि कांक्षातिचारजनककांक्षामोहनीयवेदनं कथ ? शंकातिचारत्वं कथ न ? (७) कथ च न सांशयिकमिथ्यात्वमिति ?

उ०–(१) अज्ञोऽह विद्वांसमेन पृष्ट्वा तदुक्त प्रत्येष्यामीति जिज्ञासा, (२) साधकबाधकप्रमाणमजानान उभयपक्षयोः सत्यतामति सांशयिक, (३) अन्यतरपक्षनिर्णयविधये पक्षद्वयपृच्छा शंका, (४) पदार्थस्वरूपज्ञाय तज्ज्ञानाय वचनं प्रश्न,

उ०–मरणोपाद्यवस्थायां श्रुतकेवलिनामपि नमस्कारेणाराधनेति विपत्त्युद्धारकत्वेन सारता, तद्वत्तेषामभिधेयं सम्यग्दर्शनादित्रयं तदेव सक्षिप्तमस्यापि, सामायिकाध्ययनस्येत्यभिधेयापेक्षया सक्षेप इति द्वयोरपि यथार्थं योग्येवानुष्ठितिः ॥

प्र० ६३–ननु किमिति सिद्धादीनां परमेष्ठिनां निक्षेपेषु भावरूपकर्मक्षयसिद्धाननपेक्ष्य नामसिद्धादि निक्षेप्यते, अर्हतां तु तेषु भावार्हन्तमाश्रित्यैव तन्नामादीनि दर्श्यन्ते ? यतो जिनानां चतुर्विंशतेर्नामान्येव नामजिना, तेषामेव प्रतिमा स्थापनाजिना: बद्धनिर्जीर्णजिननामान एव द्रव्यजिना, धर्मदेशनादिभिर्वेदयन्तो जिननामैव च भावजिना इति कथ्यन्ते इति ।

उ०–आर्हन्त्यमेव बद्धप्रशस्तजिननामकर्मज न सिद्धत्वादिहेतुक, तथा चार्हन्त्यमुदयजं, तच्च न नानाप्रकारवेद्य तत एव च तदाश्रितमेव निक्षेपचतुष्कम्, अत एव तु निक्षेपचतुष्कवतामेवार्हतामाद्यो नमस्कार, शेषाणां भाववतामेव ॥

प्र० ६४–ननु यथा नमोऽर्हद्भ्य इत्यनेन नामादिचतुर्धर्ममयवस्तुवादित्वान्निर्विशेषणत्वाच्च नामादिजिननमस्कार सर्वपापप्रणाशकत्वादि च तत्फलं, तथा शेषेषु नमः सिद्धेभ्य इत्यादिषु भवति न वा ? किञ्चाभवने कारणमिति ?

उ०–सिद्धादिष्वनेकविधेषु तदाश्रितेष्वेव च नामादिषु नमस्कार फल च यथोक्त तत्रैव। एतच्चार्हतामिति स्पष्टोच्चारितषष्ठ्यन्तपदानुवृत्त्या लभ्यते। अत एव चार्हदाद्यानुपूर्वीक एव नमस्कार । अग्रेऽपि पूर्वपूर्वपदानुवृत्तिकरणस्यावश्यकत्वात् । पूर्वानुपूर्व्यैव स., पश्चानुपूर्व्यनानुपूर्व्यौ तु तन्निरपेक्षे मन स्थैर्याय प्रयोजनीये, नान्यथेति ।



[ निर्णीतानन्तरहेतुके प्रागभावबुद्धिस्ततश्च तत्कार्यार्थिनां तद्विषया प्रवृत्ति, इद प्रागभावतात्पर्यम्, एवं निर्णीतनाशहेतुके प्रध्वसाभावबुद्धि ततः कार्यार्थिनां तत्र प्रवृत्तिः, तथाच न कालान्तरीयप्रागभावे तथाविधध्वसे च प्रवृत्तिस्तदर्थिनामिति ।

सुविहितानामनुकम्पा सम्यक्त्वोत्पादद्वारा मरीचिवैतरण्यादीनामिव मोक्षसाधनं मेघजीवहस्तिन इवान्यानुकम्पापि स्यादेव, तथा अनुकम्प्यापेक्षया भोगादिकसाधनमपि ।

'अणुकंपऽकामणिज्जरे' ति 'प्रशमसंवेगनिर्वेदानुकंपे' ति

वाऽसम्भवात्, अत एव विशिष्टेप्येवंविधस्थले विधेयताऽभ्युपेयते, न च धनादेर्विधेयतापत्ति, केवलस्य तस्य विधेयताया अभावादेव विशिष्टे विधेयताविधानाद्, मलिनवस्त्रत्यागवाक्येऽपि मलिनत्वस्य मलिनवस्त्रस्य वा त्याग इष्ट एव, क्वचित्तु अनूद्याभावे विधेर्विधानेऽपि दुष्टता, यथा 'शुचिर्देवमभ्यर्चयेदि'त्यत्र शुचिताऽनूद्यैव, परमऽशुचितायां देवार्चनविधानमपि दुष्टमेव, न चाशौचे पूजानिषेधेऽन्तराय, प्रत्युत तथात्वे तद्विधाने तदुपदेशे चाज्ञाभङ्गाद्युक्ति', एवमेवाकालादिस्वाध्यायेऽपि।

पर्वानुष्ठानात् शुभायुर्बन्ध इत्यत्र पर्वानुष्ठानस्य शुभहेतुता, न त्वायुर्बन्धे, तस्य तु वर्त्तमानभवायुस्तृतीयादिभाग एव कारणं, आर्षोक्तमपि तदेव, विशिष्टे वाक्ये विशेषण एव विधिनिषेधनियमोऽप्येतदेवाचष्टे, एवं च नापर्वसु जन्मायुर्बन्धमरणभवनं दृश्यमानं विरोधावह, अन्यथा स्यादेव प्रत्यक्षागमविरोध, एवं च सुष्ठूच्यते 'आयुस्तृतीयभागस्थ' पर्वघस्रेषु पञ्चसु। सुकृतं संसृजन् जन्तुर्बध्नात्यायुर्निजं शुभम्" इति। इदमपि द्वितीयादीनामाचीर्णपर्वतिथीनामाचरणे हेतुमात्र, सूत्रोक्तानां प्रभुवचनानां सद्भावे तु नैतद्रुचिरं, नहि शाश्वतमाराध्यमानानां चतुष्पर्वीतिथीनामाराधनाऽपेक्षते हेतुं युक्तिं वा, अत एव "चतुष्पर्व्यां चतुर्थ्यादि." छण्हं तिहीण मज्झम्मि इत्यादौ न हेतुदर्शनं, न चेयमाचरणा सांवत्सरिकादिपर्वतिथिवत् परावर्त्तनया, सर्वपूर्णिमामावास्यानां सूत्रप्रकरणकारैराराध्यत्वाभिधानात्, चतुष्पर्वीद्वितीयादीनामाराधनायां विरोधाभावात् ॥ ]

प्र० ६६–सत्येव 'सम्यक्त्वे न्याय्यमणुव्रतादीनां ग्रहणं नान्यथे' ति श्रीहरिभद्रसूरय श्रीधर्मबिन्दुप्रकरणे (पृ० ३१) प्रोचिवांस, 'इत्थ पुण समणोवासगधम्मे' (आ० सू० ५०) इत्याद्यावश्यकसूत्रे (आव० टी० हा० पृ० ८२५ कन्याफललिप्सया) गणभृत, चतुर्थाणुव्रतपरविवाहकरणातिचारविवरणे मार्गप्रवेशाय यथाभद्रकस्य (पंचा० टी० प० १५) मिथ्यादृशोऽपि व्रतवितरणमनुमतं श्रीहरिभद्रसूरिभि श्रावकप्रज्ञप्तिवृत्त्यादिषु, (श्रा० प्र० पृ० १४५) अन्यत्रापि–'यो बुद्ध्वा भवनैर्गुण्यं, धीर स्याद् व्रतपालने। तस्मै मार्गप्रवेशाय, ददते धीरबुद्धय: ॥१॥' इति वचनेन मिथ्यादृशामपि महाव्रतप्रदानं कथ्यते तत्कथं परस्परं न विरोधावहमिति ?

प्र० ६८–ननु हिंसादीनामष्टादशानां पापस्थानत्वे आद्येभ्यः पञ्चभ्य एव विरति कथ ? (कथं) महाव्रताणुव्रतानां पंचक चोद्घुष्यते इति ?

उ०–सत्य, क्रोधादीनि कारणरूपाणि तत्कार्याणि तु हिंसादीनि पचेति तद्विषयाणि महाव्रतादीनि तत्तद्विरमणेतररूपाणि पापस्थानेष्वायुधरूपाण्यपि तान्येव ।

प्र० ६९–यद्यपि नराणां तिरश्चां चान्त्यावस्थायामष्टादशानामपि पापस्थानानां प्रत्याख्यान शास्त्रेषु श्रूयते क्रियतेऽपि परमारोपण तु हिंसादिविरमणस्यैवेति को हेतुरत्रेति ?

उ०–सत्यं, यद्यप्यष्टादशानामेव हिंसादीनां प्रत्याख्येयत्वं तथापि हिंसादीनां पचानामेव विरमणारोपणं बाह्यस्थूलप्रवृत्तिरूपत्वेन शक्यत्वात्, क्रोधादयस्तु तदन्यथारूपा इति विवेचनीया इति, 'कोहविवेगेण' मित्यादि पठ्यते शास्त्रेषु, यद्वा जीवा सन्तीत्याद्यौपपातिकोक्ताराधनाराधकक्रमेण देशनायां नास्त्येव प्रेर्यमिति ।

प्र०–७० ननु महाव्रताणुव्रतग्रहणादौ 'सत्येव सम्यक्त्वे' इत्यादि, 'इत्यउ' (आव० चू० भा० २, पृ० १३४) इत्यादि चोच्यते परं पापस्थानपरिगणनादिषु मिथ्यात्वशल्यत्याग प्रान्त्ये प्रोच्यते, तत्र को हेतुरिति ?

उ०–व्रतप्रतिपत्तौ हि षड्जीवनिकायश्रद्धानरूपस्य सम्यक्त्वस्य प्राधान्यात्तदादावेवोच्यते, तदन्तरा शाक्यादीनां शिक्षादीनामिव त्रसेतरवधसर्वदेशविरत्यविरतिरूपाणां महाव्रतादीनामवास्तवत्वं स्यात्, परिगणने तु हिंसादीनामपरिहारेऽपि तेषामन्तत पापहेतुरूपाध्यवसायस्य सम्यक्त्वस्य विवक्षितत्वादन्त्य उपन्यास इति, शल्येषु त्वल्पाल्पसम्भविक्रमादन्ते मिथ्यात्वशल्यमुक्तमिति । औपपातिकोक्तश्रीवीरभगवद्देशनायामप्ययमेव क्रमः पापतद्विरत्यो मांसादिविरतिरपि नारकायु कारणताया मांसाहारादेर्दर्शनात्सुकरैवेति, देशनाग्रहणोभयापेक्षयाऽपि व्युत्पन्नान्ययूथिकानपेक्ष्य सम्यक्त्वादिक्रम, अत एवातिचारव्याख्यायां सम्यक्त्वातिचाराणामुपासकदशादिष्वादावाख्यान, परिणतिरूपगुणस्थानापेक्षया त्वादावेव सम्यक्त्व, दर्शनसप्तकस्यैवादौ क्षयोपशमाभावादिति ॥

प्र० ७१–ननु पञ्चपरमेष्ठिनमस्कारसूत्रं नव्योत्पन्नं सनातनं वेति? तद्व्याख्याने उत्पन्नता वैकल्पिकी कथ्यते इति ।

परेषां किं कार्यमिति ?।

उ०-विवेक एव, तत्रापि शुद्ध्यर्थिनां दुर्भिक्षाशक्त्यादावानीतानां भोगस्तु पञ्चकादियतनयापवादिकः, अत एव तद्दायकस्य बह्वीनिर्जरा भोक्तुश्चादोषतेति ॥

प्र० २१५-ननु कायोत्सर्गाणां गमनागमनादिषु निश्चितं मानं, व्युत्सर्गश्च भिन्नं तपस्तत्कथमिति ? चेत् ।

उ०-शृणु प्रायश्चित्तरूपो हि कायोत्सर्गो यथास्थानं यथामानमेव च कार्यः स्वाच्छन्द्यापत्ते व्युत्सर्गस्तु गणशरीरोपध्यादीनां सयमाबाधया तारतम्येन विधेय, न हि किञ्चिद् ध्यानादिकं निषेध्यं जैने मार्गे इति चेष्टोत्सर्गे मानमाकारश्च ॥

प्र० २१६-ननु प्रवर्त्तमाने शासने षाण्मासिकमेव तपो भवति, अधिकापन्नस्यापि झोसणा क्रियते तदा छेदप्रायश्चित्त तपोऽतिक्रान्ताय दीयते इति कथमिति ?।

उ०-आचार्यादिप्रत्यनीकः शासनविरोधीति तस्य च्छेदेनैव शुद्धिरिति सविषयश्छेदः ॥

प्र० २१७-ननु कालव्युत्सर्गो वर्षारात्रे विहाराभाव इति कथ्यते,पर्यु णाकल्पं च पर्युषितवर्षावासानां स उच्यते तत्कथमिति।

उ०-यदा हि जैना मुनय सर्वज्ञपुत्रत्वेन लोकेष्वाद्दतास्तदाधिकरणादिसम्भव इति पर्युषणाकल्पव्यवस्था, तदभावे त्वावश्यकचूर्ण्याद्युक्ता प्रागपि सम्भूतविजयशिष्याणां वर्षारात्राभिग्रहादिति ॥

प्र० २१८-ननु देवसिकाद्यतिचारचिन्तनाय 'सयणासणे'-त्यादिककायोत्सर्गे क्रियते, परं तच्चिन्तनं कुत आरभ्य कियत्पर्यन्तमिति।

उ०-क्रियमाणकायोत्सर्गपर्यन्तं । प्राक्तनप्रतिक्रमणकायोत्सर्गीयमुखानन्तकप्रतिलेखनादितश्च, एवं न कश्चित्ततोऽनालोचितकाल स्यादिति ॥

प्र० २१९-ननु कायोत्सर्गे देवसिकातिचारादि चिन्तितं आचार्यादिरर्वाक् तु न पार्यते, ततस्तदा किं कर्त्तव्यमिति ?।

उ०-विनयमूलत्वाद् धर्मस्याचार्यपारणं यावद् धर्मशुक्लयो स्थैर्यं । 'आणेणं'त्यनेन तयोरपि प्रतिज्ञानादिति ॥

प्र० २२०-ननु यद्याचार्यैर्देवसिकातिचारा श्चिश्चिन्तिता परं शिष्या बहुतमव्यापृतत्वात्तावताऽपि न पूर्यते तर्हि किमाचार्यकायोत्सर्गं पारयित्वा प्रतीक्षणीयमिति।

उ०—शिष्याणां व्याप्तिं ज्ञात्वा तावदाचार्येण स्थातव्यं कायोत्सर्गे, येन तद्पात्ये सर्वेऽपि पारयेयुरिति ॥

प्र० २२१-ननु 'मिच्छामि पडिक्कमामि'त्ति सूत्रेण साधु र्मिथ्यात्वं प्रतिक्रम्यते, परं मिथ्यात्वाभावे विरतिः कथं तिष्ठेदिति ?।

उ०—सत्यं, त्रिलोकव्यवस्थितावपि सम्यक्त्वसमानां पदार्थानामभावे विपर्ययोऽभिनिवेशो च तदभावात् त्रिविधमपि प्रतिक्रम्यमेवेति ॥

प्र० २२२-'इच्छामि खमासमणो'मित्यादिना प्रतिक्रम्यते किमित्युपविश्यापि क्रमणेनेति ?।

उ०—सत्यं, तेन एव कार्यापि क्रियन्ते सम्यग्दर्शनचारित्राणां विशुद्धिः प्रतिपित्सुकर्णे दुःस्वप्नादिकरण यथोपदेशमप्रमादं चिन्तयमरूपत्वा चेति, तत एव धर्मा आसेव्या सेव्याः प्रमादनीयाः समेताश्च पदार्थाः परिचिन्तिता भवन्ति ॥

प्र० २२३-ननु श्रुतस्तवपाक्षिकेणाचार्यपर्याया क्षमिता एव, ततः पुनः आचार्यादिभिः किं क्रियते ? इति।

उ०—सत्यं, आचार्यादिषु परोक्षा क्षमन्ते श्रमणसंघश्च प्रत्यक्षा न च सर्वे क्षमिता प्राक् पाठश्च 'खामेमि सव्वस्स य तुम्भेपि'त्ति ज्ञेय इति ॥

प्र० २२४-सम्यग्दृष्टिसमस्तपेऽर्हदिति किमर्थं ? प्राह, ननु विशोधिस्तवे तेषां प्रत्यक्षत्वाच्चैत्यानामिति सिद्धस्तवेति ।

उ०—अत एव अर्हन्तश्च चैत्यानि चेति कार्यं अर्हन्तोऽप्यत्र सर्वलोकस्थाः प्राप्तसिद्धत्वादिति ततः सर्वार्हन्त्य(तो)श्चैत्यानां च कायोत्सर्गः सिद्धः ॥

प्र० २२५-ननु वन्दनपूजनसत्कारसम्मानार्थं चैत्यानां कायोत्सर्गः क्रियते स किं तेषां प्राप्त्यर्थं तत्फलप्राप्तये चेति ?।

उ०—कायोत्सर्गावस्थानलक्षणेन वन्दनायेव करोमीति तथा च वन्दनादिप्रकारान्तरमुत्सर्ग फलं च तदेवेति वर्धमाने प्रज्ञादिभिस्तत्र विशेष इति ॥

प्र० २२६-कथमाप्ते प्रार्थनमर्थविहितबोधिलाभप्रत्ययं कायोत्सर्गं कुर्यामिति ?।

उ०—सत्यं बोधिर्धर्मप्राप्तिः, किन्तु विशिष्टो धर्मः सम्यग्

र्शनाद्यविप्रयोग प्रेत्य सद्धर्मावाप्तिर्वेति नाफलम् ॥

प्र० २२७–ननु श्रद्धामेधादिसद्भावे तद्वृद्ध्योत्सर्ग स्यात्, परं नहि तत्परास्तद्वन्त इति।

उ०–सत्यं, सद्भावे तृतीया तथाऽसद्भावे चतुर्थी कर्तुं शक्येति सुस्थमेव। ननु तस्यां प्रार्थनवत्प्रसग इति। श्रद्धा भक्त्यतिशये साभिलाषत्वे सम्यक्त्वादितीव्राभिनिवेशे च, मेधा पटुत्वे तद्गुणपरिज्ञानेऽनाशातने तत्त्वमार्गावस्थाने, धृति मन सुप्रणिधाने रागाद्यनाकुले, धारणा अर्हदुपदेशाविस्मरणे तद्गुणाविस्मरणे वा योज्यते तदा न दोष ॥

प्र० २२८–ननु वर्तमाना अतीताश्चार्हन्तस्ते यथा वन्द्यास्तथानागता अपि वन्द्या? इति चेत्।

उ०–तदर्थमेव 'धम्माइगरे'त्ति सामान्यपदं, यथा च सिद्धा आर्हन्त्यगुणरहिता अपि तद्गुणेन लोकोद्योतकरेण वन्द्यन्ते तथा भविष्यन्तोऽपि तद्वदेव वन्द्या ॥

प्र० २२९–ननु द्रव्यतां बालादिभिर्वन्दनादिभि कार्यते, तत्र अनुप्रेक्षाया एवाभावात्कथं वर्धमानायास्तस्या प्रार्थना? तस्याभावरूपत्वात्तदाऽभाव इति।

उ०–सत्यं, मतान्तरे नेदं पदद्वयं, प्रार्थना तु असन्मात्रस्याप्यविरुद्धा, बीजरूपा ह्येषा धर्मप्रशंसादिवत् ॥

प्र० २३०–ननु श्रुतस्तवे 'तमो–विण्णाणमंदता जहा पुढवीकायादीणं तिमिरं–विज्ञानाल्पता जथा सेसगाणं'ति चूर्णिकारैर्व्याख्यातं, तत्र तमसोऽवधौ पृथिवीकाया कथं? तिमिरस्यावधौ शेषा के? इति चेत्।

उ०–शृणु, व्यवहारिकराशौ निगोदान्निर्गत्यागच्छतीति तदादयो व्यावहारिका गृहीता, तेष्वल्पा चेतना पृथ्व्यामेव, अत. पृथ्वीप्रभृतिको योनिसंग्रहादिषु क्रम, शेषाश्चाव्यवहारिका अनादित. सूक्ष्मबादरनिगोदसंस्थिता इति ॥

प्र० २३१–ननु जैने शासने एकोऽपि धर्मयोग एकाऽप्याराधना सम्यग्दर्शनाद्यन्यतमा सर्वकर्मप्रणाशाय क्षमा, 'सव्वपावप्पणासणो' इत्यादीनि वचनान्यपि, तर्हि भिन्नानां व्यक्तीनां पृथग्रुचित्वादस्तूपदेश, परं विश्रान्त्येकस्मिन् योगे आराधनायां वैकस्यां किं न विश्रम्यमिति? चेत्।

उ०-नेदं सम्यगवधृतं, द्वयोरप्यौत्सर्गिकत्वात्, अधिकारिभेदेन भेदो नौत्सर्गिककेतरतया, यथा छद्मस्थानामसंसक्तस्यापि प्रतिलेखना न तु केवलिनामिति। अकसिणेत्यादि तु भावस्तवाद्द्रव्यस्तवस्य बहुगुणत्ववादनिषेधाय, यथा 'जय चरे'त्यादिगाथाश्रवणेन ज्ञानोपेक्षावादिन प्रति 'पढमं नाणंति वचन। भावस्तवांग एव द्रव्यस्तव इति वचनं तु तत्स्वरूपाख्यानायाऽत एवाकृत्स्न, प्रवृत्तानां न भावस्तवाभाव इति।

प्र० २३६-ननु प्रमाणनयनिक्षेपगमभंगद्रव्यपर्यायेषु किमप्यस्ति क्रमिकत्व तत्साफल्यं चेति?।

उ०-सम्भावनैव-तयो प्राक्तावत्प्रत्यक्षादिनावगच्छत्यात्मा पश्चात्तत्स्मृतिशिक्षाद्यर्थं धर्माधर्मतदुभयान्यद्वारेणाभिसंधानं ततस्तन्नामादिनिर्धारणं वाचकभेदकल्पना ततो वाच्यस्य द्रव्यक्षेत्रादिवैचित्र्य पर्यन्ते चोत्पादव्ययध्रौव्यपरिणामिनित्यभेदेतरविचार इति तेषां क्रम साफल्यं च सम्भाव्यते॥

प्र० २३७-नन्वनुयोगद्वारेषु द्विनामनिरूपणाधिकारे अविशेषित. सम्मूर्च्छिममनुष्य विशेषितश्च अपर्याप्त पर्याप्तश्चेति पठ्यते, सम्मूर्छिममनुष्याणां चापर्याप्तभेद एव सिद्धान्तेऽभिधीयते तत्कथमिति?।

उ०-शृणु एतानि हि व्याख्यामुखरूपाण्यनुयोगद्वाराणि ततो न तदुक्तिमात्रतो व्याख्येयपदार्थनियम, अत एव सान्निपातिकभावव्याख्याने सम्भव्यसम्भव्युभयप्रकारप्रस्तारनिवेश, एवमत्रापि प्रस्तारोक्तभेद सम्भवित्वनियम इति सर्वं सुस्थम्। अत्र केचिदेवमाहुर्यदुत-सिद्धान्तिता भेदा स्वभावोत्पत्तिका, अत एव 'कहिं णं भन्ते? संमुच्छिममणुस्सा संमुच्छती'त्यत्र द्वि सम्मूर्च्छनशब्दप्रयोग, एव प्रवचनप्रभावकसिद्धसेनाचार्यादिभि सम्मूर्छितानां साश्वाश्ववारादीनां संमूर्च्छनादि प्रवचनप्रतिपादितं संगच्छेतेति, तत एव चाक्रान्तध्मातादिवाय्वादीनां सम्मूर्च्छत्वे उच्यमानाऽचित्तता न व्याहन्येत, प्रयत्नजत्वात्तेषामपीति॥

प्र० २३८-ननु कायोत्सर्गस्थैर्दृष्टिः क्व रक्ष्या? प्रश्नोऽयमेवमुपतिष्ठते यदुत-भगवतां कायोत्सर्गासनस्था प्रतिमा तत्र च दृशौ नासाग्रनियते, कायोत्सर्गसूत्रदर्शितेष्वाकारेषु चान्तरामार्जारादीनां गतिप्रसंगस्यावगमे पुरतो गमनं मतं, तच्च युगांतरदृष्ट्यामिति।

उ०-द्विविधेषूत्सर्गकारिषु ये निरालम्बनास्ते नासाग्रदृष्ट्यो

न्तेनैव मौनं समजायतेनि किं मौनेनेतीत्थंभूतलक्षणं मौनं भिन्न प्रतिज्ञायते इति ।

उ०-सत्यं, यद्यपि वाग्द्रव्याणां 'गिण्हइ उ काइएण'-मित्यादिवचनात् कायप्रवृत्त्या ग्रहण तथापि ध्यानस्येत्थंभूततया प्रतिज्ञानात् मन प्रवर्तकसूक्ष्मयोगो वचनस्य न निरुध्यते इति स्थूलवचनप्रवृत्तिनिवारणाय मौनेनेति प्रतिज्ञानं, तथा च योगनिरोधप्रसङ्गे वाग्योगानां सूक्ष्मेतरभेदानां निरोध उच्यमान सफलतामाप्नुवीतेति ॥

प्र० २४४-ननु कुस्वप्नादिषु प्रायश्चित्तरूपतया प्रतिक्रमणोद्देशादिष्वाराधनरूपतया चोक्ता कायोत्सर्गाश्चेष्टाकायोत्सर्गास्ते नियतमाना एवेति पूर्णोनोद्योतकरचिन्तननियता, जीवितव्याघातप्रसङ्गे क्रियमाणा कायोत्सर्गा अनियता इति शास्त्रमर्यादायां निश्चितायां परमेष्ठ्याद्याराधनाद्यर्थं क्रियमाणा कायोत्सर्गा क्वान्तर्भाव्या ? इति ।

उ०-वीर्याचारादौ तदुक्तेस्तेपामनियतता वीर्याचारत्वादित्वं च सङ्गच्छते ॥

प्र० २४५-ननु स्वपरसमयवेत्तृत्वमावश्यक आचार्यादीनां गुण, तच्चाधुना तत्तत्समयगतपुस्तकपरिशीलनासाध्यं, सा च(न) पुस्तकानन्तरेण साधयितु शक्येति तत्संग्रह आवश्यक', आत्मा-(ति)रिक्तानां च बुद्धिपूर्वकं करणे ग्रहणे पालनादौ कथं परिग्रहदोषस्यावकाशो न भवति, भवति चेत्स कथमनुज्ञातोऽनुयोगधरै श्रीदशवैकालिकचूर्णिबृहत्कल्पभाष्यकारादिभिरिति ? ।

उ०-आदौ तावद् ये पुस्तकानन्तरेण पटुप्रज्ञामेधावित्वादिना यथावत् स्वपरसमयान् वेत्तुं प्रभवन्ति तेषां पुस्तकलिखनादौ प्रायश्चित्तमस्त्येव, प्रायश्चित्ते चोक्ते स्पष्ट एव तद्ग्रहणे निषेध, परं यथा सशक्तानां वस्त्राणामधारणीयत्वेऽपि विपरीतानां तेषामधारणेऽविकला दोषापत्तिर्नतु गुणलेशस्तथाऽत्राप्यपटुप्रज्ञानादीनां तदवगमा(म)समर्थानां तदग्रहणे दोष एव, तदभावे ज्ञानाभ्यासादेरभाव गृहस्थसमागमपरिचयाभिष्वंगतद्ग्रहार्थकुटुम्बादिमानता चावश्यं भवित्रीति दोषपोषको गुणप्राप्तिविघातकश्च तदसंग्रह, गृहस्थस्वामित्वे तु उद्देशाद्यनुयोगान्तस्य शास्त्रोक्तपर्यायपरिणामित्वादीक्षणस्य विधे समूलमुच्छेदापत्ति गृहस्थपारतन्त्र्यं च सप्रज्ञानामनिवार्यं चापद्येतेति ॥

प्रवचनवक्तरि वा प्रज्ञापयति वा मन्यते, निह्नवतयाऽनेकस्थानेषु गदित. सति चैवमागमोक्तत्वाद्विश्वपदार्थानां य कोऽपि तद्गतमक्षरादि द्विविधान्यतरविधिनाऽप्यपलपति स मिथ्यादृष्ट्यादिरूपो भवतीति फलितेऽर्थे यावन्त सम्यग्दृष्टयस्ते सत्यवादिन इति असत्यवादिनश्च नियमान्मिथ्यादृष्ट्यादिरूपा इति च फलितं स्यात्तच्च न घटामाटीकते, सम्यग्दृष्टीनामप्यविरतानां वितथवादित्वस्य मिथ्यादृष्ट्यादीनामपि द्रव्यविरतानां सत्यवादित्वस्याऽपि सम्भवादिति चेत् ॥

उ०–सत्यं परमत्रान्यथात्वमक्षरादीनां हेयज्ञेयोपादेयतया प्रतिपादितजीवादिपदार्थविषयिण्या प्ररूपणाव्युद्ग्राहणमिथ्याभिनिवेशादिरूपया बोध्यं, तथा च सर्वं सुस्थं प्रतिपादनं भविष्यतीति ॥

प्र० २४९–ननु मत्यादिषु केवलान्तेष्वश्रुतेषु ज्ञानेषु द्रव्यनिक्षेपे तद्विषये भूतानि तद्वदाधारभूतानि वा द्रव्याणि गीयन्ते तद्वच्छ्रुतेऽपि किं धान्यानि सह गीयन्ते, कथं च तत्र द्रव्यभावविभाग इति ? चेत् ।

उ०–शृणु, श्रुते हि प्रज्ञापनीया सर्वेऽपि पदार्था केवलं भगवाञ्जिनेश्वरो यान् प्रज्ञापनीयान् भाषते, ते द्रव्यभावश्रुतरूपा वाग्योगमवतीर्णा ये च प्रज्ञापनीया अपि नोक्ता भगवता ते भावश्रुतं, भगवद्गुणभृदपेक्षया तु जिनदेशनाशब्दा द्रव्यश्रुतं वाच्यवाचकसम्बन्धावगमपूर्वक पदार्थबोधो भावश्रुतं, ततश्च शेषप्रज्ञापनीयपदार्थानां बोधस्तदनुसारिण्या मत्या जायमानोऽपि श्रुतमेव, सामान्येन तु वाक्यबुभुत्सया शब्दचिकीर्षाबोधो वा वाच्यस्य भावश्रुत तज्जनितास्तदुत्पादका. शब्दाश्च द्रव्यश्रुतं वाच्यवाचकसम्बन्धानुसन्धानात्, तदन्तरा बोदिता श्रुता वा शब्दा ज्ञानं मत्याख्य जनयन्ति, भाषाचतुष्कविभाग. सञ्ज्ञि व्यवहारापेक्ष ॥

प्र० २५०–ननु शाश्वतचैत्येषूर्ध्वाधोलोकगतेषु प्रतिचैत्यमशीत्यधिकं शतमर्हत्प्रतिमानां तत्तिर्यग्लोकशाश्वतचैत्येषु न्यूनाधिक वेति चेत् ।

उ०–तत्र षष्टिं चैत्यानां नन्दीश्वररुचककुंडलगतानां चतुर्विंशत्यऽधिकार्हद्बिम्बयुतां तां विरहय्य शेषाणि सर्वाणि तिर्यग्लोकशाश्वतचैत्यानि विंशत्यधिकशतार्हद्बिम्बपरिकरितानीति गम्यते ॥

प्रोक्तं श्रीमत उद्दिश्य 'येभ्य प्रतिष्ठामापन्नो गच्छ खरतराभिध' इति चेत् ?।

उ०—सत्यं, खरतरगच्छस्योत्पत्तिस्तद्गच्छीयाज्जिनदत्ताज्जाता तामपलपितुं श्रीजिनेश्वरात् खरतरस्योत्पत्तिरुद्घुष्टा, परं श्रीजिनेश्वराचार्यविरचितसाहित्याद् बहुतम प्रतिपदमुपयोगिसाहित्यं श्रीअभयदेवसूरिभि स्थानाङ्गवृत्त्यादिरूपं (रचित) तत श्रीअभयदेवसूरिनाम्नाऽङ्गेसु खरतरगच्छ प्रतिष्ठामापन्न इति स्पष्टेऽर्थे न श्रीमतामभयदेवसूरीणां खरतरसन्तानीयत्वसिद्धि ॥

प्र० २५५-ननु श्रीमतामभयदेवसूरीणां जिनवल्लभ शिष्य इति खरतरैरुच्यमान सत्यं वितथं वेति ?।

उ०-वितथमेव, यत जिनवल्लभ श्रीमतामभयदेवसूरीणां स्वर्गादनु प्रश्नोत्तरैकषष्टिनामनि (ग्रन्थे) श्रीकूर्चपुरगच्छीय जिनेश्वराचार्यमेव स्वगुरुतयाऽऽह, महाराष्ट्रीयपुण्यपत्तनेऽपि श्रीमतां स्वर्गमादनु लिखिते श्रीकोट्याचार्यीयविशेषावश्यकादर्शेऽपि तत्परमोपासको नेमिकुमारोऽप्येवमेवाह—सहस्रेऽशीत्यधिके पत्तने जिनेश्वराचार्यैं ॥

प्र० २५६-ननु दुर्लभनृपाच्चैत्यवासिविजये खरतरविरुदं प्राप्तमिति खरतरसन्तानीया कथयन्ति, तत्र कियत्तथ्यमिति ?।

उ०-आदौ तावद् दुर्लभनृपो ह्यष्टसप्तत्यधिकसहस्रे दिवंगत इति तस्य जीवनं पत्तननृपत्वं काशकुसुमायमान, तदानीं पत्तनाधिपत्य भीमनृपस्यासीत्, पत्तने त्रयोदशीं यावच्च प्रख्याता आचार्या जाता, श्रीअभयदेवसूरिभिश्च पत्तने एव चैत्यवासिद्रोणाचार्याद् भगवत्यादिवृत्तय शोधिता । किञ्च-खरतरविरुदमपि न शस्यं, किञ्च-श्रीजिनेश्वरबुद्धिसागरश्रीअभयदेवसूरय सर्वेऽपि सहस्रे अशीत्यधिके जावालिपुरे आसन्निति बुद्धिसागरव्याकरणप्रमाणप्रमेयलक्ष्माष्टकवृत्त्यादिभ्य स्पष्टमवसीयते, न च खरतरसन्तानीयग्रन्थेष्वपि खरतरसन्तानीयता चतुर्दशशताब्द्या उपलभ्यते, तपोगच्छीयानां तु त्रयोदशशताब्दीजातानां तदानीतना एव प्रशस्तिपुष्पिकादय स्पष्ट तथात्वमुल्लिखन्ति स्म, तत्त्वतस्तु जिनदत्तेन पत्तने स्त्रीपूजाया निषेध कृतः पश्चात्तद्ध्वजहिंस्कारोपस्थितावुष्ट्रीमारुह्य जावालिं गत, तत्रत्यलोके तच्चर्वणे यद्वा तद्वा खडतलभाषणाल्लोकै खडतल एष इत्युद्घोषितमिति । किञ्च-प्रभावकचरिते नृपानुग्रहाच्चैत्यवासिसम्मते शिवम-

प्रतिपक्षाभावेन विकल्पाभावात् परं सप्रतिपक्ष प्रतिपातिभेद कथं न ? यत सावधय केचित् परभवे केचित्तु नेति।

उ०-सत्यं, परं पूर्वमानमेव तज्ज्ञान परभवे न नियत पातोऽपि परभवे, न च तत् तत्र भवप्रत्ययं किन्तु क्षायिकेतरत् अत्यल्पाश्च तथाभूता, वस्तुतस्तु तज्जन्मापेक्षौ तौ, न तत्र ताविति न तद्विकल्पद्वयं तत्र ॥

प्र० २६८-ननु नन्यादिषु प्रागवध्यादित्रयस्य नोइन्द्रियप्रत्यक्षतोक्ता पश्चात्तु नोइन्द्रियस्यावग्रहाद्युक्त्वा मतिरूपपरोक्षतोक्ता तत्कथं नान्योन्यविरुद्धमिति ? ।

उ०-अवध्यादौ मनसोऽपीन्द्रियानुसारितामपेक्ष्य नोशब्देनेन्द्रियापेक्षा निषिद्धा, मत्यधिकारे मनसो बाह्यनिर्वृत्त्यभावाद्देशनिषेधको नोशब्दस्तद्विधं च मन ॥

प्र० २६९-ननु केचित्पौषधिकानां पुरस्तनरात्र्यन्त्ययामे सत्यपि सामायिके पुन सामायिकोच्चारमनुमन्यन्ते, केचिदुत्सूत्र मित्याहुस्तत्र किं तत्त्वमिति ? चेत्।

उ०-सत्यं, द्विविध पौषधाश्रितस्य सामायिकस्योच्चार एकस्तावत् 'जाव अहोरत्तं पज्जुवासामि'त्ति 'जाव पोसह पज्जुवासामि'त्ति च, तत्राद्यानां सूर्योदयेनाहोरात्रस्य छेदादविरत्यापातस्य प्रतिलेखनादिकाले भावात्तन्निवारणाय पुनः सामायिकोच्चार । द्वितीयेषां तु यावत्पौषध तद्भावान्न युक्त सामायिकोच्चार, न च पौषधस्याहोरात्रमर्यादावत्त्वाद् ध्रौव्यमविरतिभावस्येति। यथा सामायिकस्य जघन्यतो द्विघटिकामर्यादित्वेऽपि पारणान्त नाविरतिमत्त्वं तथा पौषधस्य। अत एव प्रत्याख्यानादिवत्पारणक्रियासाफल्यं सोपयोगे नाविरति प्रत्याख्यानपूर्त्तेरनु स्तोककालावस्थाने शोभितरूपत्वात्, अहोरात्रावधिके पौषधे प्रतिनियतदिवसावधिकत्वान्न पुनरुच्चार, शेषो द्विघटिकादि कालश्च, ये तु प्रतिनियतदिवसशब्दं मर्यादाभिधायित्वेन न मन्वते पर्वाभिधायितया, तै पञ्चदश्यादिषूत्तरासु प्रपद्यस्तावत्सामायिकवत्पौषधोऽपि रात्र्यन्त्ययामान्त्ये ॥

प्र० २७०-ननु किमिति क्वचित् इन्द्रियकषायाव्रतेत्यादिः क्रम आश्रवे क्वचिच्चाव्रतकषायेन्द्रियेत्यादिरिति ? ॥

उ०-सत्यं, आद्य पूर्वमहत्त्वापेक्ष, अन्यस्तु रोधसम्भवापेक्ष ॥

प्र० २७१-ननु किमिति पंचपंचकाख्यान पंचविंशतौ क्रियास्विति।

स्त्ववाचीनाऽसमीचीनतरैव चेति, कदापि चन्द्रस्य वृद्धिहान्यो-र्द्विरावृत्तत्वाभावादिति, न च तथा द्विरावृत्त जलधिवेलामानमपीति ॥

प्र० २७४–ननु जैने शासनेऽगारिणामनगाराणां चास्ति तिथीनामाराधनेति ?।

उ०–अस्तीति, यत श्रमणोपासकवर्णने 'चाउद्दसट्ठमी उद्दिट्ठपुण्णमासिणीसु पडिपुण्णं पोसह'ति 'अट्ठमिचाउद्दसीसु य णियमेण हविज्ज पोसहिओ त्ति 'चतुष्पर्व्यां चतुर्थादी'ति 'छण्हं तिहीण मज्झंमि'त्यादिवचनादगारिणां चतुष्पर्वीरूपा षट्तिथय प्रतिमासमाराध्या, मासनियमहीना अपि चातुर्मासिकसांवत्सरिककल्याणकादितिथय आराध्या एव अनगाराणामपि, 'अट्ठमीचाउद्दसीनाणपंचमी'त्यादिवचनादष्टम्यादय आराध्या एव तिथय, आद्यानां पौषधादिभि परेषां तपसा, आद्यानां सर्वकालपर्वाराधनाशक्तिविरहात् परेषां अकरणे प्रायश्चित्तापत्ते ।

प्र० २७५–ननु श्री उमास्वात्याचार्यैश्चत्वारोऽतिथयः साधवः साध्व्यः श्रावका श्राविका इतिरूपा उक्ता । अतिथयश्च 'तिथिपर्वोत्सवा सर्वे, त्यक्ता येन महात्मना। अतिथिं तं विजानीयादि'-त्युक्त्या तिथ्यादिविशेषरहिता भवन्ति, तत्कथमेषां तिथीनामाराधना कार्यमाणा सङ्गच्छते ? इति चेत् ।

उ०–सत्यं, ते हि लौकिका मदनत्रयोदशीनागपंचमीवसन्ताद्युपाधिका, न च तत्कृति छुद्दशामित्यष्टम्यादितिथ्यादेराराधना श्रीसघेनाद्रियमाणोचितैव ॥

प्र० २७६–ननु जैनज्योतिशास्त्रेण तिथेर्द्वितीयादिक्रमेण प्रत्नलौकिकशास्त्रेण तृतीयसप्तमपक्षयोर्दिनस्य अर्वाचीनपञ्चाङ्गेनाऽनियतमासगता नियततिथिक्रमेणाष्टम्यादीनां क्षये आगते कथमष्टम्यादिपर्वतिथीनामाराधना नियता भवतीति ? चेत् ।

उ०–सत्यं, आदौ तावन्नियतधर्मानुष्ठानेषु तिथीनां व्यपदेशस्ततपूर्वकं तदनुष्ठान, यस्यां तिथौ सूर्योदयस्तस्यां सूर्योदयादित आरभ्यापरसूर्योदयान्तं यावत् 'पडिपुण्ण पोसहं'त्यनेनाहोरात्रग्रहणात् अभक्तार्थिकादेरप्यहोरात्रच्छेदान्तत्वात्, अत एव 'उदयंमि जा तिही'ति निर्दिश्य तिथ्यारम्भान्तमध्याह्नादिव्यापिनीषु क्रियमाणासु 'आणाभगे'त्यादयो दोषा, अहोरात्रसमानतिथ्याद्यन्ताभावात्, तथा च दिने समाप्तिमती तिथिरिति वदन्निरस्तो नव्य, तृतीयादितिथीनां क्षये द्वितीयादिलोपापत्ते., तद्धि

शब्दयोरन्यथा योजन प्रकरणविरोधसाङ्कर्यदोषपरमित्युपेक्ष्यमेव पर्वानुष्ठानाय व्यपदेशविषय प्रकरणं, तिथिद्वयव्यपदेशस्तु नैव प्रस्तुत इति, सूर्यानुदयजन्योपक्रमो विधेयता च पर्वतिथेरेव तत्र साङ्कर्यं शोभास्पदं, अपिशब्देनान्यसज्ञेत्यादिदुर्जनसन्तोषन्यायेन पर्वानुष्ठानमुद्दिश्यैव चास्या प्रणयनादिति।

अत्रावधेयमिद यत्तिथे' पञ्चाङ्गप्रतिपादिताया परावर्तो न शक्यस्तस्या गणितफलत्वात्, परं व्यपदेश परावर्तितु शक्य, अत 'अवरविद्ध अवराविं'त्ति 'न हुज्ज पुव्वा हु तविद्धे'ति च 'व्यपदेश्यसज्ञापरतयोक्तम्, एवमेव 'जा तिही तिताओ' त्ति च प्रागपि संज्ञापरतयोदित उदयमात्रस्पर्शेन समग्रमहोरात्रमन्यतिथिभोगबहुत्वेऽपि चेद् यद्देशे प्राग्दिने प्रागुदयाद् बहुतरतत्तिथिभोगेऽप्यव्यपदेशे चेन्न मृषावाद व्यवहारानुसारित्वाद् व्यपदेशस्य तर्हि क्षीणायां पर्वतिथौ पूर्वस्या पर्वतिथित्वे कथं स इति।

ननु नव्या अपि पर्वतिथीनामष्टम्यादीनां क्षयं मन्वाना आराधना तु तदीया पूर्वासु सप्तम्यादिषु तैः सम्मता शास्त्रेऽपि सप्तम्यां त्रयोदश्यामित्याद्युपलम्भ इति चेत् ?।

उ०–सत्यं, परं प्रष्टव्यास्ते यद्भवद्भिस्तिथिमुद्दिश्याराधना विधीयते आराधनां वोद्दिश्य तिथिरिति, आद्येऽष्टम्यादीनामभावे किंमूलाराधना, भोगोऽस्तीति चेद् 'उदयमि जा तिही'त्यस्य लोपापत्ति, भोगकालात्प्राग् नियमानां पर्वगतानां विराधनेन देयं प्रायश्चित्त, प्रत्याख्यानाद्यवसरे चाद्याष्टम्यादितिथिदिवस इति, न च वाच्य क्षये पूर्वा तिथि कार्ये'ति प्रघोषश्च न स्वीकार्य, स हि पूर्वस्या अपर्वतिथे पर्वतिथे क्षये पर्वतिथिकरणार्थस्तदाश्रिताराधना तु तत्त्वादेव, 'न हुज्जे'त्यादीनि वाक्यान्यपि तदा सप्तम्यादीनां व्यपदेशाभावमेवाहु। न चैकमपि शास्त्रवच आराधनायां तिथिसाङ्कर्यवादिनां शङ्करमस्ति, द्वितीयस्तु अपर्वतिथिष्वाराधनाया उच्छेदं प्रतिपादयन् नव्यानेनोऽनस्स्वेव चटापयेत् अपर्वसूपवासादे प्रतिषेधस्य स्वीकारात् पञ्चाङ्गनिवेदितास्ता सप्तम्यादय एवेति सप्तम्यामित्यादि दृष्ट्वापि न मोग्धव्यं मनीषिणा, अन्यथा पञ्चाङ्गीयासु वृद्धासु द्विकरणापत्तिर्दुर्वारैव, तेषां आराधनार्थं क्षये व्यपदेशपरावृत्तिर्यथा 'वृद्धाव'पीति सिद्धान्त', क्षयेऽपर्वतिथे पूर्वस्य तु पर्वतिथित्वेन वृद्धौ च पूर्वापर्वतिथित्वेनाद्याया व्यपदेश इति ॥

नार्हत्वात् चतुष्पर्व्यन्यतमपर्वापाते उभयोरहोरात्रेणाराधकस्तत्पर्वापसारयेत् एकतराराधकस्य तु यथारुच्याराधना ॥

प्र० २७९-ननु का चतुष्पर्वी का च पञ्चपर्वी दशपर्वी द्वादशपर्वी किंमूलाश्च ता ? इति ।

उ० – कृष्णशुक्लाष्टमीचतुर्दश्यमावास्यापूर्णिमालक्षणा षट्तिथिरूपा चतुष्पर्वी आगमप्रौढग्रन्थेष्वेवैव गीयते, शुक्लपञ्चमी कृष्णेतराष्टमीचतुर्दशीलक्षणा पञ्चपर्वी, कृष्णेतरद्वितीयापञ्चम्येकादशीचतुर्दशीलक्षणा दशपर्वी, सोद्दिष्टपौर्णमासीरूपा च द्वादशपर्वी श्रावकधर्मविध्यादिप्रकरणात्तत लवणोदधिवेलाविशेषवृद्धेर्जीवाभिगमादिषूक्तत्वाच्च, चतुष्पर्वी लोकानुलब्धमाहात्म्या वैदिकपौराणिकसुगतादितीर्थान्तरीयैरपि पर्वतया स्वीकृता, द्वितीयाद्यास्तु सुविहितगीतार्थाचीर्णा इति मन्तव्या एव, परं न चतुष्पर्व्या बाधां विधातुमलमिति ॥

प्र० २८०-नन्ववशिष्टे तृतीयेंशे आयुष परभवीयस्य बन्धो भवतीति सिद्धान्तसिद्धं तथा च द्वितीयाद्या दशतिथय एव युक्ता इति चेद्

उ०-बालिशजल्पितमेतत्, प्रतिपदादिजातानां तृतीयादिषु तद्भावेन तथाविधानां नृणां तासां पर्वतिथित्वप्रसङ्गात्, न चापर्वसु न जन्म मरण वा नेति, पर्वतिथिजातानामप्यवमरात्रभावेनानियतत्वात् तृतीयांशस्यापि, वस्तुतस्तु पर्वाराधक पर्वण्यायुषो बन्धे शुभमेव बध्नाति शुभानुष्ठानपरत्वाद् इति शास्त्रवच श्रद्धापथमानेय, अपर्वतिथ्योस्तत्पूर्वोत्तरयोस्तत्संस्कारात् भवेत् तथा चेन्नासम्भाव्यम् ॥

प्र० २८१-ननु कथं तिथे क्षीणत्वमिति ?।

उ०-लौकिकलोकोत्तरयोर्द्वयोरपि मार्गयो सूर्योदयास्पर्शित्वेन तिथे क्षीणत्वमभिमतं, यद्यपि क्षीणा बहुभोगा अन्त्यसमाप्तिमती चावश्यं स्यात्, तथा च भोगबाहुल्यं समाप्तिमत्वं च तिथेर्लक्षणमाचक्षाणोऽज्ञतम एव, अर्थशास्त्रे तु तिथिदिनसममानत्वात्स्यादन्त्यवती तिथि, परं पर्वपर्वानन्तरपर्वतिथिक्षयप्रसङ्गे पूर्वपूर्वतरापर्वतिथ्योरपि पर्वत्वेन व्यवहारस्तु 'क्षये पूर्वे'ति 'अह जइ कह वि ने'त्याद्यपवादशास्त्रसाधित इति बलीयस्त्वाच्चापवादस्योत्सर्गप्राप्तव्यपदेशाया अपर्वतिथेरपवादप्राप्तया पर्वतिथ्या बाध यावत्सम्भवन्यायेन च नष्टपञ्चदश्याश्चतु-

सम्यक्शब्दस्यानुवृत्तिरस्त्येव सामायिकादिशब्दानां सान्वर्थानां ग्रहणाद्वा तत समितिसूत्रे समीच सत्वाद्योगनिग्रहसूत्रे'सम्यगि'-त्युक्तेर्नानुवृत्ति' सम्यक्शब्दस्येति वचनेऽपि न क्षति, अत एव च 'मार्गाच्यवने त्यादिपरिषहसहनप्रयोजनसूत्रं, किञ्च-सम्यग्द-शोऽधिकृत्यैवाश्रवादिप्रकरणात् न मिथ्यात्वस्याश्रवे सम्यक्त्वस्य चोपन्यास संवरे इति, विवरणे त्रयाणां सम्यक्शब्दाश्रितत्व तु मुग्धबोधाय, अभ्यर्हितत्वेन बहुस्वरस्यापि पातोक्तौ ज्ञानाद्योरितरताप्रसङ्ग, उत्पत्तिक्रमग्रहणेऽपि तद्वतस्तयो सम्यक्त्वमेव स्यादिति न नियम, देवत्वादेस्तेभ्यो भावात् न तद्वतामप्यशुभप्रकृतीनां नोदय इति नियमाभावात् ॥

प्र० २८६-ननु कथमाश्रवे पञ्चैवावतानि, अष्टादशानामपि पापानां किं नाव्रततेति ? चेत् ।

उ०-हिंसादयो बाह्यप्रवृत्तिमया इति शक्या तत्प्रवृत्ति-निवृत्तिप्रतिज्ञेति तदनिवृत्तिरूपा आश्रवाः, कषायास्तु व्यवच्छे-दोपशमौ विना सततोदयस्वभावा इति तदुदयरोधविफलीकरणे-नैषां विवेक एव शक्य, अभिसन्धिपूर्वका आद्या, नान्त्या-स्तथेत्यपि च ॥

प्र० २८७-ननु आवश्यकचूर्णेः कर्तैव नन्द्यनुयोगादिचूर्णीनां विधाता परो वेति ।

उ०-श्रीजिनभद्रक्षमाश्रमणैर्विशेषणवत्यां सामायिकचूर्णेरु-ल्लेखात् प्राचीनतमाऽऽवश्यकचूर्णि, अनुयोगचूर्णौ तु शरीराधिकारे श्रीजिनभद्रकृतत्वस्योल्लेखात् सा पश्चात्तनी, नन्द्यादिचूर्णिषु तु बहुश आवश्यकचूर्ण्यतिदेशात्ता अपि पश्चात्तन्य इति ॥

प्र० २८८-ननु आवरणक्षये सत्यवश्यमावार्यस्यैकान्तिक आत्यन्तिकश्च प्रादुर्भाव, अन्यथाऽऽवार्यनाक्षययोर्निष्फलत्वात्, केवलिनश्च 'खीणआभिणिवोहिअनाणावरणे'त्याद्यनुयोगद्वारादिव-चनात्क्षीणमत्यावरणादिमन्त एव, ततस्तेषां न मत्यादीनि चत्वारि ज्ञानानि, एकज्ञानाश्च पठ्यन्ते ते इति चेत् ।

उ०-सत्यं, परमावार्यं द्विधा-प्रसङ्गापरसाधनजन्म आत्म-स्वरूपभूतं च, तत्र केवलज्ञानादिन्यात्मस्वरूपभूतानि तानि त्वावरणक्षये स्युरेवात्यन्तिकानि, परं दानादिमत्यादीनि प्रसङ्गपर-साधनोत्थानीति तानि तथात्वेपि न तथेति ॥

प्र० २८९-ननु मतिमूलकं श्रुत मतिश्चेन्द्रियजं इन्द्रियाणि च नामितद्रव्यक्षेत्रादिज्ञानानीति ते न सर्वविषये स्यानामिति ।

क्षायोपशमिके एव ते भवतां, परमवधिमनःपर्ययौ तु यदपेक्षौ सम्यक्चारित्रमात्रापेक्षाविति किं न तयोः क्षायिकत्वासम्भव ? इति ।

उ०–तयोरप्याभोगोऽस्त्येव निमित्तं स च वीर्यान्तरायविलयमेव स तु केवलिनामेवेति सत्यार्थेऽपि न सर्वविषयाणीति, मनः सर्वविषयत्वा तु कल्पनारूपा न तु साक्षात्काररूपेति अमूर्तानां न साक्षात्केवलमन्यैरपीत्यपि चिन्त्यमेवात्र ॥

प्र० २९०–मत्याभिनिबोधिकादीनां चतुर्णां क्षायिकत्वाभावे किमिति क्षीणमत्याभिनिबोधिकज्ञानावरणेत्यादि पठ्यते इति ।

उ०–सत्यं, न हि केवले क्षये तान्यतीनामीति, येन मत्यादिप्रसङ्ग उपयुक्तता सावरणा सेव तत्र निरावरणेति क्षीणता, किञ्च–क्षयोपशमादिस्ये स्वाधीनमवस्थानं तेन तत्किरणानां क्षुद्रानामप्यवनामत्व, परं नात्र केवलाख्ये क्षीणे मत्याभिनामुपत्व इत्यपि क्षायोपशमिकत्वेऽपि नहि दृष्टे गिरौ तत्स्थतृणावस्थाम्, अत्रापि न भस्मावरणक्षये प्रभागावरणावस्थामे, अप्राप्तमे स्थापनस्थानं तु स्यादपि ससाधनसमर्पणोपयोगात्मयाभूते न स इत्यर्थे तु न किञ्चिद् इति ॥

प्र० २९१–ननु व्रतानि सातिचाराणि सुकृताय भवन्ति नेतिवचनात्सातिचारानुष्ठानानां परिहार्यता गीता, सातिचारानुष्ठानप्रायो निरतिचारमनुष्ठानं भवतीतिवचनात्तु सातिचारानुष्ठानस्यापि विधेयता गीयते तत्र कतमः पक्षो माननीय इति ॥

उ०–यथायथमुभयमपीति, यतोऽतिचारपरिहरणार्थं प्रयतं पक्षस्थित्य, तथा परिणामेऽपि यदि भवेत् कथञ्चिदतिचारस्तदा स दोषो न व्रतभङ्गाद्विरस्य, सर्वविरतानां प्रमत्तादिगुणान् विना वीतरागगुणस्थानानामाप्राप्तात् ॥

प्र० २९२–नन्वर्हत्सु सर्वेष्वपि समानमार्हन्त्यमिति भिन्न-भिन्नक्षेत्रेषु भिन्नभिन्नानामर्हतां मूलनायकत्वेन शेषाणां तु शेषनाम्ना कथनं सर्वसंघे प्रवर्तते, परं कथं न तद्व्यवहाररूपमिति चेत् ।

उ०–सत्यं, तन्मूलनायकत्वं नार्हत्वापेक्षया किन्तु संघस्य दर्शनाद्यपेक्षया, यत प्रतिमातत्स्य प्राक्कल्पेव दर्शनं, पूजकस्तस्यात्तां पूजां करोति अर्चनसामग्री च विशिष्य या सा तस्मिन् अर्प्यते इति तथाविधात्मतो भावनाया क्षेत्र इति ॥

प्र० २९३–ननु सिद्धानां सिध्यतां वहव आकारा, तत्कथ तेषां बिम्बेषु कार्योत्सर्गपर्यंकरूपमासनद्वयमेव क्रियते ? इति चेत्।

उ०–सत्यं, सिध्यन्तोऽर्हन्त उक्तासनद्वयवन्त इति सर्वेषामासनद्वयं तदेव क्रियते, समवसरणे तु जिना योगमुद्रास्थितहस्ता पादपीठधृतपादा सिंहासनस्थाश्चेति ॥

प्र० २९४–ननु पञ्चसु परमेष्ठिषु केवले साधुपद एव किमिति सर्वेतिसर्वनामविशेषणयोजनं ? न शेषेष्विति।

उ०–सत्यं, सर्वेऽप्यर्हदादय समानगुणकल्पा इति व्यवच्छेद्यस्यासम्भवान्न विशेषिता, साधवस्तु सामाचार्यभिग्रहोपकरणप्रायश्चित्तगच्छनिश्राद्यपेक्षया भिन्नभिन्नस्वरूपा सर्वे च सर्वेषा सम्यग्दृशां नम्या इति योग्यमेव तत्र विशेषणमिति ॥

प्र० २९५–ननु 'जे उ दाणं पसंसंति वहमिच्छंति पाणिणो। जे य ण पडिसेहंति वित्तिच्छेयं करेंति ते' ॥ इति सूत्रकृताङ्गवचनेन सर्व दानं निषेध्यमापद्यते, न च सुपात्रदाने न तत्प्रसङ्ग, साधुनिश्राविशेषाभावेऽपि देयोत्पादगता तु तथाविधैव जीवविराधनेति, सत्यं, अत्र तावत्साधोर्न वृत्ति, अत्र च तद्विचार:, अनुकम्पादीन्यपि वृत्तिरूपाणि तर्हि कोऽत्र विषय ? इति चेत्।

उ०–ब्राह्मणा दानागतक्षेत्रहलगोभूम्यादिभिर्जीविकावन्त इति तद्दान वृत्तिसाधन, प्रशंसन्तीति पदं च तत्रैव घटते, तद्वर्गेणेतरैस्तत्प्रसंसाया अत्यन्तादरणात्, यथा च सादरदाने प्रतिलम्भशब्द साधुदाने प्रयुज्यते, सामान्यदाने तु 'दलेमाणे' इति, परं ब्राह्मणानां वर्णमपेक्ष्य प्रतिलम्भशब्दप्रयोग शास्त्रेष्वपि, अपरे तु जलतीर्थसुभटाश्वादिष्वपि एतत्सूत्रं योजयन्तीति ॥

प्र० २९६–ननु वर्त्तनाद्या उपकारा कालस्योक्तास्तत्र प्रकरणे तस्य द्रव्यत्वं किमित्यभिहितं न, कथं चोत्पादव्ययध्रौव्ययुक्त सदित्यत्र प्रकरणे तस्य तदभिहितमिति ? चेत्।

उ०–वर्तनादिस्थाने कालस्य द्रव्यत्वोक्तौ तस्यापि वर्त्तनादीनि वाच्यानि स्युस्तथा चानवस्थाप्रसङ्ग, उत्पादादिप्रकरणे तु सूर्यादिचारोत्पन्नस्य ग्रहणात्तद्धेतुक स, 'सोऽनन्तसमय' इत्यपि तत्रैव युक्तं, अभेद्य स तथाविधकालस्यैव यतो भाग इति ॥

णीणियेति चूर्णिकारादय, षड्विंशतितमात् पूर्वादुत्तराध्ययनादिति कोट्याचार्या, तृतीया नवमपूर्वगततृतीयाचारवस्तुप्राभृतादिति चूर्णिकारादय इति ॥

प्र० ३०१–ननूत्तराध्ययनगतसामाचार्यध्ययने दशविधसामाचारीदर्शकगाथासप्तकमेव, शेषं त्वोघसामाचारीपरं पूर्णमध्ययनमिति कथं ततोऽत्रोक्ताया दशधासामाचार्या उद्धार उपक्रमो वेति ? चेत् ।

उ०–सत्यं, नवमपूर्वगतोत्तराध्ययनप्राभृतग्रहणे न कोऽपि शङ्कालेश, यथौघे ओघप्राभृतं पदविभागे छेदप्राभृतं तथात्रोत्तराध्ययनप्राभृतस्य स्वीकारे यथार्थ एवोपक्रम इति । किञ्चोत्तराध्ययनान्यपि अङ्गाद् दृष्टिवादादे प्रभवाणीति तत्रस्थवचनात् कम्मप्पवायपुव्वोत वचनाच्चोपक्रमरूपाण्येति ॥

प्र० ३०२ – नन्वन्यत्रानुयोगद्वारस्थानाङ्गसूत्रोत्तराध्ययनेषु दशधासामाचारी ओघसामाचारी च दशवैकालिकापिण्डैषणाध्ययनोत्तराध्ययनसामाचार्यध्ययनादिषु पदविभागरूपापि यतिजीतकल्पादिषु दृश्यते, तत्र किं वाच्यमिति ?

उ०–आवश्यकनिर्युक्त्युक्तसामाचार्युद्धृता एव ता, अत एव दशधासामाचार्या वर्णने 'उपसंपया य काले'त्यनेनात्रोक्तकालद्वारसूचा, ओघे च संखेवेणेति यतिजीतस्य तु स्पष्टैव संक्षिप्ततेति ॥

प्र० ३०३–ननु किं निर्युक्तेरनु स्थानाङ्गादीनि ? येन तदुक्तस्योद्धारस्तत्रेति चेत् ।

उ०–सत्यं, श्रीस्कन्दिलाचार्यकृत एवाद्यतनोऽनुयोग, स्पष्टं चेदं नन्द्यामिति, अत एव 'तिसमइयाहारगे'त्यादिनिर्युक्तिमेव नन्द्यां प्रोक्तमिति ॥

प्र० ३०४–नन्वविधिना क्रियमाणो धर्मो द्रव्यधर्मो भावधर्मो वेति ? ।

उ०–उभयरूप अविधिपरिहारयत्नेनैवमेवाविधिना चेत् स भवति तदा धर्मो द्रव्यरूपोऽनुपादेयश्च विदुषां, कृते त्वविधिपरिहारप्रयत्ने कथञ्चिदविधिना युक्तो भवति धर्म, स तु भावधर्म उपादेयश्च विदुषामिति धर्मसंग्रहण्यवलोकनान्निश्चेयमिति ॥

प्र० ३०५–ननु किमिति क्रियाणां पञ्चविंशति पञ्चपञ्चैकैरुच्यते ? इति ।

यवस्थान्तर केवलं स्यात्, अन्यच्च मत्यादय आत्मगुणास्तन्नाशश्चावरणोदयादज्ञानपर्याये नतु केवले इति कथं घटते सिद्धान्त ? इति।

उ०-सत्यं, छाद्मस्थ्यवज्ज्ञानानां निरर्थकताप्रतिपादनायोक्तं।

प्र० ३११-ननु देवनारकवत्तीर्थकराणामपि भवारम्भादेवावधेर्भावात्किं न तत्तेषां भवप्रत्ययमिति ?

उ०-तेषां तत्पारभविकं न तु तद्भवजमिति न भवप्रत्ययं तत्तेषामिति ॥

प्र० ३१२-ननु 'तत्थ चत्तारि नाणाइं ठप्पाइं ठवणिज्जाइं ति नोउद्दिस्सिज्जन्तीति कोऽर्थ ? इति।

उ०-मत्यादीनां चतुर्णां स्वपरप्रकाशकत्वेन क्षयोपशमादित उत्पन्नानामपि स्वयं धारणीयानि, न च तानि परेभ्यो वितरणीयानि, एवं स्वरूपत्वाच्च तेषां दानोत्सुकैरपि स्वात्मन्येव धार्याणि न तु दातुं शक्यानीति न तेषामुद्देशादय, श्रुतं 'त्वाचारादि गणधरादिदानादुत्पन्नमपि अगानङ्गादिरूपेण श्रीसङ्घायार्पितत्वात्तस्य तत्परोत्पन्न, ततश्च दातुं शक्यमेव तदिति तस्योद्देशाद्यो विधिरत एव प्रस्तुतस्योद्देशादय इति सम्भाव्यते ॥

प्र० ३१३-ननु मार्गान्तरैरपि साधूनां कांक्षामोहोदयोऽभिहित, स कथं घटते ? अन्ययूथीयमार्गाणां मिथ्यारूपत्वात् तत्र न सत्यताशङ्कापि सुदृशामिति।

उ०-अत्र नैतानि मार्गान्तराणि ग्राह्याणि किन्त्वावश्यकोक्तानि 'नाणदंसणेहि तित्थ'मित्यादीनि, यद्वाऽऽर्यमहागिरय उपाध्याया गणाधिपाश्च वाचकवशमूलपुरुषा इत्यपि सम्भव, अतो गणधरवशो वाचकवंशश्चेत्यावश्यकादावुच्यते, वाचकवशे च सम्यग्दर्शनेत्यादित्रिरूपो मोक्षमार्ग उच्यते, सर्वश्रोतॄणां समानसाधकत्वात्, इतरे तु श्रोतॄणां प्रतिपन्नदर्शनत्वात् 'णाणकिरियाहि मोक्ख त्ति तथा मार्गमाहु। तत्र न कांक्षितव्यमिति, अत 'वायगपयमुत्तम पत्त'त्यादि ॥

प्र० ३१४-नन्वर्हन्नमस्कारे निक्षेपचतुष्कं कथमायाति ?

उ०-अर्हदित्यभिधानान्नाम, अष्टादशदोषरहिताकारचिन्तनात् स्थापना, अर्हतो जीवत्वाभिप्रायादपि द्रव्यं, प्रातिहार्याष्टकादिचिन्तातो भावार्हन्त्यं चिन्तनीयमवश्यमिति निक्षेचतुष्कं ॥

प्र० ३१५-ननु सर्वमूर्त्तामूर्त्तेषु सन्त्यगुरुलघुपर्याया, ते चावश्यं श्रद्धेया परं युक्त्या कयाचिच्छक्या अवसातुमिति ?।

प्र० ३१९–ननु पापस्याकृत्रिमत्वात् कृत्रिमेण व्यवहारेण कथं सम्बन्धो, येन व्यवहारेण चौरव्यपदेश इति कथ्यते इति चेत्।

उ०–सत्यं, न व्यवहारेणानादिकयोरकृत्रिमयो पुण्यपापयो सम्बन्ध, परं व्यवहारातीतस्य विधानेऽवश्यं दुष्टाभिसन्धान ततश्च पाप ततस्तादृशाद् व्यवहारविरुद्धान्निवर्त्तनं सम्मतमणुव्रत तृतीय चौर्यादिति ॥

प्र० ३२०–ननु युग्मिना परिणयनव्यवहाराभावात् स्वदारव्यवहार कथमिति ? चेद्।

उ०–समुत्पन्ना समागम च प्रपन्ना स्वदारा, भगवता नाभेयेन तु असमागामिनी वालिका सुनन्दा वृतेति नान्यदारग्रह इति॥

प्र० ३२१–ननु शक्रस्तवे शक्राद्यो 'दीवो' इत्यादीनि प्रथमान्तानि पदानि ब्रुवन्ति, तत्र कथ विभक्तिवचनभेदः कश्चैषामुच्चारणेऽभिप्रायसम्भव ? इति।

उ०–आदौ तावद् 'आदिकरेभ्य' इत्यादीनि 'मुत्ताण मोय गाण'मित्यन्तानि विशेषणानि भगवद्भ्य इत्युक्त्या नमस्करणाद् भगवत्ताहेतुभूतसमग्रैश्वर्यादिषड्विधभगदर्शकानि चतुर्थ्यर्थेषष्ठीबहुवचनान्तानि, बहुवचनं चार्हद्बहुत्वार्थमिति पूज्या, 'गुरावेकश्च बहुवद्'तिवचनादिति शाब्दिका, 'दीवो' इत्यादीनि च न भगवतो विशेषणानि, दीवो इत्यादीनि भगवतां धर्मातिशयितायां तत्प्राप्त्यर्थं यानि साधनानि त्रसत्वपञ्चेन्द्रियत्वनरत्वार्यदेशधर्मप्रातिरूपाणि मानुष्यकर्मभूम्यार्यदेशसर्वाक्षपाटवशुश्रूषारूपाण्यावश्यकानि तानि भगवद्भक्तेर्भावीनि ततो शुश्रूषाहेतुतया प्रदीपो मल्लिकेत्यादिवदुपचर्याख्यायते यद्भगवानेव द्वीपादिरूपोऽस्माकं देवगतेर्नरत्यामगनं द्वीपागमन कर्मभूमिस्त्रायिनी आर्यदेशो धर्माणां शरणं सर्वाक्षपाटवमेवार्हद्धर्मक्रियाहेतु शुश्रूषैव च मुमुक्षूणां प्रतिष्ठेतिमत्वा प्रथमैकवचनेन तान्युच्चार्य उक्तवस्तुहेतुत्वेन तथोपचारं कृत्वा भगवांस्तथोच्यते, प्रपन्नदर्शनानां नराणा नैवमिति न तानि तैरुच्यन्ते, तैस्तु धर्माचरणवलादेवैतानि स्वयं लभ्यानि यत इति ॥

प्र० ३२२–ननु सम्प्रतिना नृपेणावन्तीसौराष्ट्रादयो देशा आर्यीकृता इति पञ्चापीया वदन्ति, तत्र किं वाच्यमिति ? चेत्।

उ०–सम्प्रतेर्जन्मन: प्रागेवावन्तीदेशादय आर्या एवार्ये, आर्यदेशेषु चेदीसौराष्ट्रादीनामार्यत्वं भद्रबाह्वादिभिर्भणनात्, अवन्त्यां

प्र० ३२५–ननु सर्वेऽपि जीवा सम्यक्त्वमाप्नुवन्त आद्यावौपशमिकमेवाप्नोति सम्यक्त्वं, नेतरदिति चेत्।

उ०–तीव्रप्रयत्नो ह्यपूर्वेणैव पुञ्जत्रयीं करोति क्षायोपशमिकं चादावाप्नोति परं स्तोका एव तादृशाः, मन्दप्रयत्नोऽन्तरकरणवेदनकाले पुञ्जत्रय करोति वेदितत्वान्मिथ्यात्वस्य तत्कालयोग्यऊपरदेशशान्तदाव इव स औपशमिको भवति, भूयांसश्चैतादृशाः, प्रविरलस्तु मरुदेवादिसदृश अपूर्वकरणमारुह्य क्षायिकमुपैति। अत एव 'जो वा अकयतिपुज' इति विशेषणे अक्षपितमिथ्यात्व इति प्रोक्त, स्पष्टं चेद विशेषावश्यके बृहत्कल्पे च॥

प्र० ३२६–ननु किमाहारत्यागादयश्चत्वार पौषधवाच्याः प्रत्येकमपीति? चेत्।

उ०–प्रत्येकमप्याहारत्यागादय पौषधा, अत एव पौषधश्चतुर्धेति, श्रावकवर्णने च 'पडिपुन्नं पोसहं'ति च कथ्यते, पर्युषणाकल्पे आहारत्यागस्य कच्छदेशीयश्रावकाधिकारे च केवलस्य ब्रह्मचर्यस्य पौषधशब्देनाभिधानं चेति।

प्र० ३२७–ननु 'समणोऽहं'मित्यनेन प्रव्रज्याभिधानात् 'संजतविरत' इति पुनरुक्तमिति? चेत्।

उ०–प्रव्रज्याऽत्र रजोहरणादिवेषयुक्तत्वरूपा, तथा च जैनश्रमणोऽहमित्येनावता वेषधारणग्रहणात्संयतविरते इति पदे न पुनरुक्ते, सयतशब्दोऽत्र न संयमार्थे किन्तु करणीययोगयत्नपर इति प्राणातिपातादिविरमणार्थकेन विरतपदेन न पुनरुक्तता, 'पडिहये'त्यादीनि तु हेत्वर्थानि पदानि ग्रन्थिभेदादिना प्रतिघातात् विगतिपरिणत्या च प्रत्याख्यानादिति।

प्र० ३२८–ननु सामायिकसूत्रे आलोचनामन्तरेण 'पडिक्कमामी'त्युक्तं, प्रतिक्रमणे च 'एवमहं आलोइयनिंदिये'त्यादौ प्रतिक्रमणं नोक्तं, तत्र को हेतुरिति? चेत्।

उ०–सामायिकसूत्रे तस्सेत्यनेनालोचना प्रतिक्रमणसूत्रे च एवमित्यनेन कृतं प्रतिक्रमणं दर्शितमेवेति॥

प्र० ३२९–ननु चतुर्विंशतौ जिनेषु बहुषु जिनेषु पूर्वतीर्थकरेण स्थापितेषु तीर्थेषु विद्यमानेषु तीर्थे नूत्नं स्थापितं, तत्र किं कारणमिति? चेत्।

उ०–सम्पूर्णो दृष्टिवादस्तु नैव तत्र प्रवर्त्तमान स्यादिति तत्प्रणयनार्थं गणधरप्रव्रज्यादिना तीर्थप्रवर्त्तनमावश्यकं, किञ्च-पट्टपारम्पर्येण मोक्षगमनमपि नष्टपूर्वमेव स्यात्, तच्च तस्मात्

उ०-स शुध्यन्तर्भवाष्टकमिति चेति पल्यासंख्यभवा हि भवान्ते प्रतिपत्य द्वितीयभवेऽप्यलभ्यमानाया देशविरते, भवाष्टकनियमस्तु प्रतिभवं लभ्यमानां देशविरतिमपेक्ष्य, न च संवेधेनापि नरत्वमष्टभवाधिके भवे, न च देशविरतिमानाऽऽजवजवीभावभागीति भवाष्टकं ॥

प्र० ३३३-ननु 'अड्ढाइज्जेसु'त्ति सूत्रे 'जावत केवि साहू रयहरणगोच्छपडिग्गहधारे'तिवचनात् पाणिपात्रा जिना अन्ये च सामान्या अपि तथाविधा मुनयः प्रत्येकबुद्धाश्चाप्रतिग्रहत्वान्न वन्दिताः स्युरिति ? चेत्।

उ०-तेषां ग्रहणार्थमेव 'ते' इत्यनेन गतार्थत्वेऽपि 'सव्वे' इत्यस्य ग्रहणं तच्चतुर्यामा मूलादर्वाक् क्षतानाचारा द्वितीयेन पदेन न्यूनाष्टादशसहस्रशीलांगा अपि ग्राह्या इति दर्शनायेति बोध्यमिति॥

प्र० ३३४-ननु 'अड्ढाइज्जेसु' प्रभृतिसूत्रेषु 'सिरसा मनसे'त्यत्र शिरोग्रहणं कृत्वा पुनः 'मत्थएण वंदामि'त्ति शिर पदं कथं गृह्यते ? इति चेत्।

उ०-सत्यं, नात्र मस्तकशब्दः शिरोवाची, किन्तु जैनशासनपरिभाषया 'मत्थएण वंदामि' त्यखण्डमेव पदं वाग्वन्दनाभिधायि, ततः श्रीसङ्घे 'मत्थएण वंदामि'त्तिपदेनैव नमनव्यवहारः, श्रावकसमुदाय एव च केवलेन 'वन्दामि'त्तिपदेनेति ॥

प्र० ३३५-ननु, 'मित्ती मे सव्वभूएसु'त्ति वचसो 'मय्येव निपतत्वेतज्जगदुश्चरित'मिति वचस को विशेष? इति चेत्।

उ० यद्यपि मैत्रीभावनाया परहितचिन्तैव विषयः, परं सम्यक्त्वगुणजन्यः स, 'मित्ती मे' इत्यत्र तु अकल्याणाकरणबुद्धिरूप उपशमो विषय उपद्रवकरणबुद्धेरुपशम तद्रूपा चात्र मैत्री, अत एवोक्त 'वेरं मज्झ न केणइ'त्ति, वैरस्योपद्रवबुद्धेरुत्पादकत्वात् हेतुहेतुमद्भावश्चात्र इत्येवमस्यार्थे ज्ञाते जगदुश्चरितपात्रताभवनबुद्धेरधमताऽसम्भविता च ज्ञास्यते, स एव विशेषः ॥

प्र० ३३६-ननु 'मिच्छि मेराइ द्विओ'त्ति वचनात् 'मिथ्या मे दुष्कृत भूयादपुनःक्रियया‌ऽन्वित'मितिभणनात् 'जं दुक्कडं ति मिच्छाकाउण निसेवए पुणो पावं' इत्यादिनिर्युक्तिवचनाच्च प्रतिक्रमणापरपर्यायं मिथ्यादुष्कृतं भवति तदा प्रतिक्रमणसूत्रे चापुनःकरणता किं नोक्तेति ? चेत्।

उ०-'तस्स सव्वस्स देवसिअस्स अइयारस्स पडिक्कमामि'त्यंतं प्रतिक्रमणमुक्त्वा 'समणोऽहं'मित्यादित 'मायामोसविव-

तत्तदर्थं चिन्तन च पृथगर्थं लोकोद्योतकरादीनामिति व्यत्यय कुत्रापीति ॥

प्र० ३३९–ननु यथा पाक्षिकादीना बृहत्त्वेऽपि तत्प्रतिक्रमणेन दैवसिकं न बाध्यते क्रियते च तेन तदपि, एव यदा चतुर्दश्यामाषाढादीना चातुर्मासिककरणमाचीर्णं तदा तत्रत्य पाक्षिक बाधितमिति ? चेत्।

उ०–सत्य, दैवसिकरात्रिके हि अहोरात्रे नियततया क्रियेते अन्वहमिति न तत्र सम्पूर्णाहोरात्रव्यापितिथिसञ्ज्ञाया निवेश, न ते च बाध्येते बाधेते वा पर, पाक्षिकादीनामहोरात्रव्यापिपाक्षिकादितिथिसञ्ज्ञानियतत्वाद् एकस्मिश्चाह्नि तिथिसञ्ज्ञाद्वयस्यानवकाशात्तत्र चातुर्मासिकचतुर्दशीति सञ्ज्ञाया निवेशान्न पाक्षिकचतुर्दशीसञ्ज्ञाया निवेशस्तदभावे च न तत्र पाक्षिकमिति॥

प्र० ३४०–नन्वाद्यैस्त्रिभि सामायिकादिचतुर्विंशतिस्तवश्रुतस्तवैश्चारित्रसम्यक्त्वज्ञानानां कृता विशुद्धि, परमवशिष्टेन सिद्धस्तव किमर्थ ? इति चेत्।

उ०–चारित्रादीनां पूर्णफल प्राप्तानां बहुमानात् आत्मादर्शत्वाद्भक्ते; आवश्यकपूर्त्तेरन्त्यमङ्गलार्थं च सिद्धस्तव इति, तथैव तीर्थाधिपस्तुती अपि, चूलिकास्तुतिप्रभृति त्वाचीर्णं श्रीहरिभद्राचार्यादपि प्राक्तनाचार्यैरिति 'सेसा जहिच्छाए'त्ति चूर्णि, गाथात्रयं त्वनेकगमभद्रगनयगहनात् ॥

प्र० ३४१–ननु'सिद्धाण'मित्यादीन्येकार्थिकानि पदानि स्वरूपविशेषणभूतानि व्यवच्छेदकानि वेति ?।

उ०–'सिद्धत्ति अ वुद्धत्ति ये'त्यादिवचनादेकार्थिकान्यपि विशिष्टावस्थासूचकतया स्वरूपविशेषणाण्यपि पार्षदत्वे तु व्यवच्छेदकान्यपि, एकार्थिकानां प्रयोग सकलकालीनैकावस्थाज्ञापनार्थं स्वरूपविशेषणानां भक्त्यतिशयार्थं व्यवच्छेदकानां तु सम्यग्मार्गबोधाय, यतो नात्र विद्यासिद्धाद्या न च भवावतारिण न चानादिकाः सिद्धानालम्बना वा नैव च यत्र तत्र स्थिता इति ज्ञापनं, सदाग्रहण च साद्यनन्तस्थित्यर्थं, 'सव्वसिद्धाण'मिति सर्वकर्मभूमिगसर्वकालीयसर्वभेदसिद्धग्रहणायेति ॥

प्र० ३४२–ननु यदतिचारस्मरणकायोत्सर्गे आचार्याणां द्विः स्वातिचाराणां चिन्तनं तद्दैवसिके रात्रिकेऽपि वेति ? चेत्।

उ०–दिवस एव साधूनां बहुव्यापारत्वात्तावत्कालपूर्त्तये आचार्याणां द्विश्चिन्तनं, रात्रिकादिषु तत्प्रयोजनं नेति एकश एव तदिति ॥

उ०—आद्यया गाथया समनोज्ञानां आचार्यादीनां क्षामणा स्वप्रत्ययेन तेषामेव कषायित्वस्य संभवात् जे मे केइ कसाये'ति वचश्च आक्रोशाद्या कषायमूला एवेति, द्वितीयगाथया चासमनोज्ञानामपि क्षामणमञ्जलिं मस्तके कृत्वेति। ननु 'सव्वस्स जीवरासिस्से'त्यादिगाथायां 'भावओ धम्मनिहियनियचित्तो'त्ति किंविशिष्टा क्षामणेति चेन्नहि सम्यग्दृष्टय सर्वानप्यङ्गिन क्षामयन्तो धर्मस्य बाधामशेनाप्यङ्गीकुर्वन्ति, ततश्च धर्मबाधामन्तरेण सर्वेषामङ्गिनां क्षामणमिति हेतोर्भावओ इत्यादि, नहि धर्मत्यागेन शान्तिरैक्यं क्षामणा वेति तत्त्वमिति ॥

प्र० ३४८—ननु नैर्ग्रन्थ्यं प्रवचनमेवार्थ इतरप्रधानसामान्येन परमार्थ सर्वोत्कृष्टत्वेनैकान्तिकात्यन्तिकहिताावहतया च शेष निर्ग्रन्थप्रवचनातिरिक्त तु स्वरूपतु स्वफलतु श्चानुबन्धत्वादनर्थरूपमिति श्रद्धानस्य मानसिकत्वात्कथं प्रोच्यते 'देवासुरे'त्यादिभिर्न सह्यन्ते प्रवचनादतिक्रमयितुमिति ? चेत्।

उ० - निर्ग्रन्थप्रवचनोक्तसम्यक्त्वमहाव्रतानुव्रतप्रतिमाद्यभिग्रहादिक्रियाभ्य क्रियमाणाभ्यो न चालयितु शक्या इति तस्यार्थः, कामदेवश्रमणोपासकादीनामुपसर्गेषु तदेव देवादिभि कारयितुमिष्टमिति ॥

प्र० ३४९—ननु आलोचनाप्रतिक्रमणकायोत्सर्गैरशुद्धानामतिचाराणां तपसा शोधनात् प्रत्याख्यानं कथं व्रणचिकित्सारूपं, चिकित्सायामपि कार्यत एवोपवासादि, कथं च प्रत्याख्यानगुणधारणारूपत्वमिति ? चेत्।

उ०—प्रमत्ततमानां तप.शोध्या अपि स्युरतिचाराः, परं अल्पतमा एव ते शासने इति न तद्विवक्षा, वहय श्रमणा मोक्षार्थमभ्युद्यता आत्मगुणधारणोद्देशेनैव प्रवर्त्तन्ते तपसि शक्त्यनुरूपं च प्रत्याख्यानकरणं कायोत्सर्गे चिन्तयति न तु प्रायश्चित्तानुरूपमिति गुणधारणरूपतैव प्रत्याख्यानाध्ययनस्य, किञ्च-प्रायश्चित्तस्यादानकाळे व्रणचिकित्सारूपताया भावेऽपि तदनुष्ठानकाळे तु गुणधारणरूपतैव, किञ्च-पूर्वार्धाद्युत्तरगुणे क्रियमाणे तथोच्येत परं देशोत्तरगुणमहाव्रतानुव्रतादिके गुणधारणामन्तरा वक्तु शक्यं किञ्चिदिति ॥

प्र० ३५०—ननु सामायिकं सावद्यनिषेधादिप्रतिज्ञारूपत्वेन प्रत्याख्यानमेव, तत् किं भिन्न तत उपदिश्यते ? इति चेत्।

उ०—सत्यं, तस्य प्रत्याख्यान प्रत्याख्यान एव किन्तु सामायिकावश्यकगत सामायिकसूत्रं समभावस्थितिस्मरणरूपं चारित्राचारगवेषणापूर्वकतच्छुद्ध्यर्थकोत्सर्गार्थमेवेति ॥

उ०-'पत्तेयं पत्तेयं जस्स जस्स जे अणुरूवा माउगादयो त्ति पराणि स्यु, दृष्टिवादे षट्चत्वारिंशत् ब्राह्म्या वाऽक्षराणि वह्वर्थसग्रहश्चार्थ' ॥

प्र० ३७०-ननु श्रीपुण्डरीकगणभृतो मूर्तिस्तीर्थकरवन्नि रालम्बननिरुपकरणपल्यंकासनस्था कथं क्रियते ? तस्या पट्टिकायां च किं लाञ्छनमिति ?।

उ०-श्रीपुण्डरीकाचलतीर्थप्रवर्त्तकत्वात्तत्र तस्य तीर्थकर-समानाकारा मूर्त्ति स्थापिता स्यात्, जिनानामिव न गणभृतां शरीरे पादादौ लाञ्छनमिति न तस्या स्वयं किञ्चिल्लाञ्छन, भगवद्वृषभदेवानुवृत्त्या वृषभ सयमित्वाद्रजोहरणं वा लाञ्छनम् ॥

प्र० ३७१-ननु सार्धद्वये द्वीपे सर्वत्रानन्तजीवमुक्ते सिद्धाद्रेरनन्तजीवसिद्धिदायकत्वेन कथ वन्द्यते ? इति।

उ०-प्रतिविशिष्टमेवासंख्यातगुणमानन्त्यमत्र, अष्टापदादौ स्वीवीर्यान्मुनिरत्र तु तीर्थपावित्र्यप्राधान्येन इति ।

प्र० ३७२-ननु उत्सर्गे 'ताव काय'मित्यनेन कर्मोक्तमेव, ततश्चात्मानमिति केन योज्यमिति ? चेत् ।

उ०-नान्येन केनचित् किन्तु कायस्य विशेषणमेतत्, तथा चात्मनोऽभिन्नं काय तावन्तं कालं व्युत्सृजामीतिभावार्थ । 'आहारमुवहिं देह'मित्यादौ तु निर्जीवकायस्याप्यधिकरणपरिहाराय वर्जनमस्ति, ततश्चरमोच्छ्वासेत्यादि तत्र ॥

प्र० ३७३-ननु यदा सुदर्शनया प्रज्ञापितो जमालिर्न प्रतिबुद्धस्त्यक्तश्च तया सपरिवारया तदा साधव' परिवारभूतास्तत्समीपेऽस्थुर्नवेति ? चेत् ।

उ०-सपरिवारा सुदर्शना शेषसाधवश्च प्राग्गतेभ्य ये स्थिता अभूवन् सर्वेऽपि ते भगवन्त श्रीश्रमणभगवन्महावीरमुपसम्पन्ना, एकाकी जमालिरेव स्थित इति ॥

प्र० ३७४ - ननु कायोत्सर्गे दैवसिकाद्या अतिचाराश्चिन्त्या, तत्रान्तस्तु कायोत्सर्गकाल इति स्पष्टं, परमादि' कुतो ज्ञेयो ? यतो विचित्रो दिवसानां स निशीथप्रभातसूर्योदयैरिति ।

उ० - तत्पूर्वप्रतिक्रमणगताचारकायोत्सर्गानन्तरीयकीमुखपोतिकाप्रतिलेखनाकाल सर्वत्रादिरिति, रात्रिके स्तुतित्रयम् ॥

प्र० ३७५ - ननु असंभविनां श्रावकभिक्षुप्रतिमानां कथं प्रतिक्रमणमिति ? चेत् ॥

उ०–यद्यपि प्रकान्त श्रुतस्तवस्तस्य चाद्यवर्धतामिति क्रियापदेनाशास्ता वृद्धि, पर तस्या स्वरूपं नाभिहित, ततः किं स्वरूपेण साऽऽशास्ता तदभिधेयवृद्ध्या तदाधारवृद्ध्या तत्फलवृद्ध्या चेति स्पष्टयति कुमतान्धकारप्रसारकान्ययूथानां विजयो य स फलं तस्य तद्द्वारा वर्धतां श्रुतमिति, एवं च मिथ्याश्रुतानां सम्यक्त्वपरिग्रहेण यत् सम्यक्श्रुतत्व तस्यापि वृद्धिरन्तर्भाविता, फलस्य च विजयस्य श्रुतस्य द्वादशाङ्गस्यापि सम्यक्श्रुतत्वं सम्यग्दर्शनरूपेणैवेति धर्मोत्तरस्य सम्यग्दर्शनस्याशास्ता वृद्धि द्वितीयक्रियेति ॥

प्र० ३८९–ननु 'वंदणवत्तियाए' इत्यादिषु वन्दनादिप्रत्ययं कायोत्सर्गं कुर्वे इति कथ्यते, तत्र कथं वन्दनादिफलमिति ? चेत्।

उ०–सत्यं, श्रद्धादिभिर्वर्धमानः सद्गुणसमुत्कीर्तनापूर्वकं कायोत्सर्गस्थानेन वन्दनपूजनसत्कारसन्मानान् करोमीत्येषोऽर्थः, वन्दनादिकरण तेन रूपेण, ततश्च पृथक्कायोत्सर्गाद् वन्दनादीनि, तत्करणं च वोधिलाभायेति 'बोहिलाभवत्तियाए'त्ति, भावस्तवो ह्येष, कायोत्सर्गस्य चारित्ररूपत्वात् ॥

प्र० ३९०–ननु पाक्षिकसूत्रादिवत् 'मोक्खाए'त्यनुक्त्वा किमिति निरुवसग्गवत्तियाए त्यत्र निरुपसर्गशब्दे मोक्ष उक्त इति चेत्।

उ० – शिवाचलारुगनन्ताव्याबाधापुनरावृत्तिमयसिद्धिस्थानप्राप्तिरूपमोक्षप्रत्ययसूचनाय शिवाद्युपेतमेव निरुपद्रवत्वान्निरुपसर्गं नान्यदिति।

प्र० ३९१–ननु 'निरुवसग्गवत्तियाए' इत्यनेन प्रयोजनमुत्कृष्टमुदीर्य पश्चाच्छ्रद्धादयो हेतव किमिति दृश्यन्ते? इति चेत्।

उ० – तृतीयापक्षे श्रद्धादिभि क्रियमाणस्य वन्दनादिकायोत्सर्गस्य मोक्षफलतेति सूत्रयन्तो ग्रन्थकारा उत्कण्ठुरासन्नभव्यतां ज्ञापयन्ति मोक्षार्थिता तु चरमावर्त्तारम्भादेवेति, चतुर्थीपक्षे तु श्रद्धाद्या अनन्तरफलरूपा परम्परफलं च मोक्ष, परं स ऐकान्तिक आत्यन्तिकश्चेति प्रागुक्त इति।

प्र० ३९२–ननु 'अरिहंत चेइयाणं करेमि काउस्सग्ग'मित्युक्त्वा पुनः किमिति 'ठामि काउस्सग्ग' मिति ? चेत्।

उ०–सत्यं, प्राक्तन, वन्दनादिसमर्पणनिर्देशार्थं उत्तरंत्वन्यत्रोच्छ्वसितादीनां कारणानामवध्यर्थं ईर्यापथिक्यादिकायोत्सर्ग-

प्रसङ्गेऽप्यपि 'ठामि काउस्सग्गं' मितिपाठात्। तथा च ठामीत्यादिकः कायोत्सर्गसूत्र, प्राक् तु तत्प्रयोजनमिति ॥

प्र० ३९३—ननु श्रुतज्ञानं तमस्तिमिरपटलविध्वंसस्य जनकं तज्ज्ञाप्यं वेति ? चेत्।

उ०—यथा दण्डो घटस्य जनकोऽपि लक्षकोऽपि च, एवमत्र श्रुतज्ञानं सम्यग्ज्ञानावरणापहारेणैव जन्यते ज्ञाप्यते च तस्मिन् च स्तुत्यादिरूपतापत्त्या तदधिकतरं ज्ञाप्यतेऽपि, तत एव तदैकान्तिकात्यन्तिकमिति ॥

प्र० ३९४—ननु धर्मस्तवप्रतिपादकसूत्रे भावितश्चेति विशेषणमर्हतो जिनवरेन्द्र सिद्धं यदि श्रुतस्तव कर्मभूमि जिनानां स्तुतौ किमिति 'धम्माइगरे' ति विशेषणमिति ? चेत्।

उ०—तत्र तीर्थस्येष्वप्याविपत्त एव तीर्थं च प्रवचनात् गणिपिटकं, जिनेश्वरैः तस्यात्मकत्वात् तदाधारभूतमपि चतुर्विध श्रमणादिकं संघ गणधरादिप्रतिष्ठाप्यत्वात् तत्र तपोमयकर्तृता पठिता, अत्र तु श्रुतस्य प्रधानत्वात् धर्मादिकरत्वोक्त्या भगवतां स्तवः, भगवतामेव श्रुताधिष्ठातृत्वात्। किञ्च—चारित्रधर्मप्रणेतारोऽपि स्वयंसंबुद्धाश्च भवेयुरपि, परं गणिपिटक श्रुतधर्मस्य प्रणेतारस्तु भगवन्त इति विशिष्टता ॥

प्र० ३९५—ननु श्रुतस्तवे 'सीमाधरस्स वंदे' इति षष्ठी कथं ? कथं 'समाप्तपुनरावृत्त्यै' 'पप्फोडियमोहजालस्से' ति चेति।

उ०—अविवक्षितकर्मत्वे षष्ठी, तमस्तिमिरनाशकत्वादि च मोहमस्फोटनादर्शितज्ञापनाय समाप्तपुनरावृत्तेति ॥

प्र० ३९६—ननु हिंसयोद्भूतानां भोगोपभोगयोर्न कथं हिंसकत्वमिति ? चेत्।

उ०—सत्यं, सा हि सङ्क्लिष्टाध्यवसायेन परपर्यायविनाशात्मिका भवति, न च तयोस्तथाभावस्य सम्भवः, अन्यथा सर्व कर्मप्रेरित एव वधक इति स्यात्तत्र दोषः, किञ्च—मनुष्या यथाधिकमवस्त्रभोगश्रीविविधाचारिण इति तेषामेव अगत्यधमाधमत्वं नियतदोषत्वादि च स्यात्, सद्गतिमोक्षावाप्तिस्तु न तेषां स्वप्नान्तरेऽपि स्यात्, ततो यथोक्तमेवास्या लक्षणम् ॥

प्र० ३९७—ननु साधूनामुपवासादि तर्हि किंफलमिति ? चेत्।

उ०—निर्जराफलं, 'तपसा निर्जरा चे'ति, शेषस्त्विन्द्रियकषायप्रयोगरोधफलं नत्वितरः ॥

प्र० ३९८—ननु शक्रस्तवे प्रतिपदं नम पदस्यानुवर्त्तनीयत्वे किमिति 'नमो जिणाण'ति पुनरुच्यते ? इति चेत्।

उ०—सत्य, भगवत्त्वदर्शनायैश्वर्यायादिकरत्वादयो, रूपातिशयाय पुरुषोत्तमत्वादयो, यशस्वितायै लोकोत्तमत्वादय', श्रीमत्तायै अभयदत्वादयः, धर्मप्रधानत्वाय धर्मदत्वादय, प्रयत्नातिशयाय चाप्रतिहतज्ञानदर्शनधरत्वादय उक्तास्तेन भगवतामर्हतां भवावस्थागता भगवत्ता नमस्कृता, 'सव्वन्नूण'मित्यादिना तु भिन्ना सिद्धावस्था'नमोजिणाण' मित्यनेन नमस्क्रियते इति पुनर्नम उच्चारण, अत एवातीर्थकरासिद्धनमस्काराय 'जेअ अईये'-त्यादिगाथाऽन्ते पठ्यते इति ॥

प्र० ३९९—ननु'सिरसा मणसा मत्थपण वंदामि'त्यत्र केन पदेन को योग? इति ।

उ०—सिरसेत्यनेन काय' मणसेत्यनेन च मनः मत्थपण वंदामित्यनेनाखण्डेन वाग्योग, वन्दने एप एव क्रमो न्याय्यः, कायेन पूर्वमभ्यासभावात्, नवरं'मत्थपण वंदामि'त्ति श्रमणव्यवहार्या वाग्नतिः ॥

प्र० ४००—ननु श्रमणोपासक प्राणातिपातादिकं त्रसादिविपयं प्रत्याचक्षाण स्थूलत्रसादिविपयतया स्थूलशब्देन विशेपित प्रत्याख्यायात् परं स्थूलकमिति सर्वत्र कथमुच्यते ? इति चेत्।

उ०—सत्यं, अत्यन्तार्थे कं ब्रुवन् त्रसादिविपयमपि संकल्पनिरपराधनिरपेक्षविपयतादिकां प्रतिज्ञां कथयति, अत एव संकल्पादिरहितं प्रत्याख्यानं क्वचित्कथ्यते ॥

प्र० ४०१—ननु वधहिंसादिपु सत्सु शब्देपु लघुपु किमिति प्राणातिपातशब्दो गुरुर्निर्दिष्ट ? किमिति चातिना विशेपित? इति चेत्।

उ०—हिंसावधादयो जगति जीवमधिकृत्य प्रवृत्ता', न च नित्यत्वाज्जीवस्य वधो हिंसा वेति प्राणातिपात इति प्रोच्यते, प्राणा अप्यत्र वलश्वासयोर्द्रव्यभावरूपा ,इन्द्रियेपु तु द्रव्यश्रोत्रादीनामवसानेऽपि जीवस्यावस्थानाद्भावरूपा द्रव्येन्द्रियनाशे तु नैवेतरदवतिष्ठेत् तस्य तदाधारत्वात् वहुप्राणधारकाणां वधे नरकायुष्कदेशनात् प्राणशक्तिनाशानुसारेण पापवन्धात् मुन्यादिवधे जग रित्वाच्च योग्यमेव प्राणेति मर्यादातिक्रमाय चाति ॥

प्र० ४०२—ननु जीवादिपु तत्त्वेपु देवादिप्वाराध्येपु च यथार्थप्रत्ययावधारणेन भावतो निश्चितत्वमेव सम्यक्त्वमित्युच्यते,

तत्र शास्त्रादिनामतिचारता कथं? शास्त्रे सम्यक्त्वस्य कारणं हि क्रियते निश्चयस्य यत्न इति चेत्।

उ०—सत्यं, जीवादिके एकस्मिन्नितरत्र तत्तत्स्थानाभिमत एव मत एव जीवाद्येकतरतत्त्वविशेषया जिनशासनतीर्थंकर सत्त्वादिरिव देशशङ्का सर्वशङ्का चेति॥

प्र० ५०१–ननु नानासुगतादिमतेषु धर्मेषु सद्धर्मत्वेनाभिमतेषु कांक्षायां किं वा विचिकित्सितेषु? उभयथाऽपि मिथ्यात्वमेव, यतो जिनमतं नयनयसमूहं पराणि च मतान्येकनयाऽभिमानि, तत् उभयाश्रिते मते धर्मनयाऽभिमते सर्वनयाश्रितस्य न व्यवस्थता। किञ्च–सर्वेऽपि शास्त्रशास्त्रमया धर्मास्ततस्तत्रस्य सुन्दरश्चासौ शास्त्रमूलत्वात् सुन्दरताभिमतो केव हानिः? पूर्वाचार्या अपि 'उदधाविव सर्वसिन्धवः' इत्यादिना 'सुयासंगणमन भित्यादिना च तमनुमोदयामासुरेव।

उ०—सत्यं, अस्तो तावत् न जैनं मतं सर्वनयसमूहमयं, सर्वथोगाभावात्, किन्तु स्यात्कारपाहितसर्वनयसमूहं तत्र परामिव नान्य सुन्दराय सुन्दरम्याय। एतदेव नयास्तत्र स्यात्पदलाञ्छना इमे रसोपविद्धा इव लोहधातवः' इति स्तुति रासार्थैः साधित, नयानां लोहत्वमुक्त्वा स्यात्रसेन सुवर्णताया उपगतत्वात्। उदधाविवेतिवचनमपि जिनवचने परमतनयगतानां यस्तव्यतार्थमार्थम्, स्यात्प्रयोगवार्ता तु परेषेति। 'सुयाळसगण्य मय मिथ्यादिना तु शास्त्रशास्त्रप्रणेतृसर्वज्ञतामूलस्वाजीवादिपदार्थानां परे तदनुसृता एव तत्तद्वादिन इति दर्शनार्थं यत्नः, तथा च अगस्ति न आगमसत्त्वादिकः पारमार्थिकभावः स सर्वो शास्त्रागममूल इति वर्णितं, एवं स्यात्कारान्तसर्वनयमयेऽत्र सर्वज्ञप्रणीते च जिनमते यमत्वमास्थाय स्यात्कारशून्यैकनयमते कापात्ने महार्घताभिप्रानुस्तवे चेते न धर्मत्वाभिमतो विघातक इति सुष्ठुता॥

प्र० ५०४–ननु हिंसादीनां दोषा उच्यन्ते तेन तेभ्यो निवृत्तिरूपा अहिंसाया भविष्यन्त्येव, पृथगहिंसादीनां गुणाख्यानेन किमिति? चेत्।

उ०—सत्यं, यद्यपि हिंसादिभ्यो निवृत्तयो महाव्रतरूपा परमहिंसादिषु निश्चलत्व तद्गुणदर्शनमेवेति। किञ्च–निवृत्ति हिंसादिभ्या पापकीर्तिका, परमहिंसादिभ्या यत्नाप्रवृत्तिकोपा-

दिवर्जनं त्वनुक्षणमिति न्याय्यमहिंसादीनां गुणदर्शनमिति। अन्यच्च जैनमते आश्रवप्रवृत्तीनां भूतस्वभावमिषेण निर्दोषता नेति दोषदर्शनं, गुणाश्च यतनारक्षणादिनैवेति गुणदर्शनं, अत एवाहिंसा सजमो त्ति भेदेनोपदर्शन श्रीशय्यभवसूरीणामिति ॥

प्र० ४०५–ननु साधूनाधायनाधाय वा कृतेष्वशनादिष्वारम्भस्तु समान एव, तत्किमेकमेव त्यज्यते ? इति चेत्।

उ०–सत्यं, आधाय कृते गृह्यमाणे साधोरनुमतिदोषः, नेतरस्मिन्, साधुभिरुद्घुष्यते च सदा सर्वेषामहिंसादिकरणमेव, ततो न इतरस्मिन् दोष, उद्घुष्टे अनागतधनिकमृतचौरद्रव्यग्राहकनृपवदिति ॥

प्र० ४०६–ननु श्रमणस्य भगवतो महावीरस्य केवलज्ञानोत्पादभूमौ समवसरणमभून्न वा ? तस्मिन्नाचष्ट धर्मं नवा ? मनुष्या आगता न वेति ?

उ०–भगवान् सुधर्मस्वामी श्रीआचारांगभावनाध्ययने एवं आदिष्टवान् यदुत भगवान्–'पुव्वि देवाणं धम्ममाइक्खइ'त्ति, ततश्च न मनुष्याणां तदाऽऽगमनं, न च तेभ्यो धर्माख्यानं, तत्र आवश्यकचूर्णिवृत्त्योस्तु भगवतो वर्णनेऽत्रस्थानमात्रमुक्तं तद्वचसी यथा–जाहे सामिस्स केवलनाण उप्पन्न ताहे इंदादीया देवा सव्विड्ढीए हट्ठतुट्ठा णाणुप्पदा(प्पाद)महिमं करेंति, तत्थ भगवं जाणति णत्थि एत्थ पव्वयंतओ जत्थ नत्थि पव्वयंतओ तत्थ न पवत्तिज्जतित्ति, एगं जत्थ नाण वितिय इमं चेव, अहवा एगं छउमत्थकालियाए एगं इमं चेवत्ति चूर्णि., 'भगवतो ज्ञानरत्नोत्पत्तिसमनतरमेव देवाश्चतुर्विधा अभ्यागता आसन्, तत्र च प्रव्रज्याप्रतिपत्ता न कश्चिद्विद्यते इति भगवान् विज्ञाय विशिष्टधर्मकथनाय न प्रवृत्तवान्' इति, ज्ञानोत्पत्तिस्थानकृतपूजापेक्षया चास्य द्वितीयतेति च वृत्ति। अत्र समवसरणरचनैव तावन्नानुमता किन्तु देवपूजामात्रमनुमतं, स्पष्टमपि चूर्णौ विशेषत एतत्, यतस्तत्रोक्त–ताहे सामी तत्थ मुहुत्तं अच्छति जाव देवा पूयं करेंति एस केवलकप्पो किर जं उप्पण्णे नाणे मुहुत्तमेत्त अच्छियव्वति, ततश्च नैव तत्र समवसरण, न च नराणामागम इति। 'तत्रादिश्य क्षणं धर्मं, देवोद्योते जगद्गुरुः। लाभाभावान्मध्यमायां, महसेने वनेऽगमदि'॥ ति कल्पकिरणावल्यां, मिलितेषु सुरासुरेषु स्थले वृष्टिमिव निष्फलां देशनां क्षणं दत्त्वेति कल्पसुबोधिकायां, पवज्जाइगुणाणं पडिवत्तिखमो न कोइ इह अत्थि।

घमभावचिन्तनेन तच्चिन्तनाच्च तद्विषयको ममत्वभावो व्युच्छिद्यते ऐकान्तिकात्यन्तिकफले धर्मे यत्यते इति ॥

प्र० ४०९–ननु प्राणिनां सूक्ष्मा बादराश्चेति त्रसा स्थावराश्चेति भेदा शास्त्रे श्रूयन्ते तत् त्रसप्राणातिपातविरतिरित्यभिधा उचिता, आद्याणुव्रते स्थूला समे द्वीन्द्रियाद्या सूक्ष्माश्च समे एकेन्द्रिया इति विभिद्य शास्त्रोत्तीर्णमेव स्थूलप्राणातिपातविरमणमित्यभिधानमिति चेत्।

उ०–सत्यं, शास्त्रीयं सूक्ष्माद्येवाभिधानं, परमनवगाढसम्यक्त्वानां माषतुषप्रायाणां सम्यग्दृशामपि लोकानुगत्या जीवान् प्रतिपादयितुमिष्यते तदा स्यात्तथैव नियमितुं शक्यं, शास्त्रेऽपि द्वीन्द्रियाणामुदारत्रसत्वमुच्यतेऽपि, यद्वा स्थूलदृष्टीनामपि चलनादिक्रियाया अध्यक्षतो जीवत्वेन गम्या द्वीन्द्रियादय, एकेन्द्रियास्तु सूक्ष्मदृशां सम्यग्दृशामेव जीवत्वेन प्रतीता,अत एव षड्जीवनिकायजीवश्रद्धानं सम्यग्दर्शनमित्यप्यापेक्षिकं पठ्यते, तथा चाश्रद्धानानपि पृथिव्यादिजीवान् त्रसवधविरतिं कारयन्त्यपि गीतार्था इति ॥

प्र० ४१०–ननु आद्याणुव्रतस्य जीवा विषयाः, ते च स्थूलसूक्ष्मभेदा इति योग्यं स्यात्, शेषाणां तु क्रियाविषयत्वात्कथं स्थूलेन विशेष्यते इति ? चेत्।

उ०–सत्यं, वागादीनां नास्ति स्थूलेतरभेदौ, परं तत्फलादिषु तु स्यातां, द्वितीये आत्मन परस्य वाऽतीवोपघातः सङ्क्लेशो वा, तथा तृतीये चौर इति व्यपदेश', चतुर्थे अपरिणीतेति, प्रमाणमेव च पञ्चमेऽणुव्रते स्थूलत्वे गमकानीति ॥

प्र० ४११–ननु 'मूलच्छेज्जं पुण होइ बारसण्हं कसायाणं'तिवचनात् श्रावकेषु प्रत्याख्यानावरणोदयवर्त्तित्वाद् व्रतारोपणमेव कथमिति ? चेत्।

उ०–सत्य, साधूनुदिश्य शास्त्राणां प्रणयनात् चारित्रविषयं तच्च, अप्रत्याख्यानावरणविलयाच्चाणुव्रतानि ततो नाणुव्रतारोपणमयुक्तं तेषामिति।

प्र० ४१२–ननु मिथ्यादृष्टयोऽपि सर्वविरतेभ्योऽनन्तगुणनिर्जरका (कथ) भवन्तीति? चेत्।

उ० – सम्यग्दर्शनप्राप्तयेऽपूर्वकरणेनानन्तानुबन्धिनो यदा वियोजयन्ति तदा श्रीतत्त्वार्थाचाराङ्गादिगतानन्तानुबन्धिवियोज-

कानां तथाप्यगारात् भवन्त्येव, आगाराद्धि सम्यक्त्वोत्पत्तौ पुष्कलदीर्घसागरायुष्कत्वादिति ॥

प्र० ४१३–ननु चक्रिणां वासुदेवानां च चक्रादीन्येकेन्द्रियपञ्चेन्द्रियरूपाणि निधानानि च यानि तानि चक्रिवासुदेवेषु नरकगतेषु चक्रिषु प्रव्रजितेषु वा कां दशामनुभवन्ति तत्पुण्यानां परक्षीणत्वाभावादिति ? चेत्।

उ० मायाप्रतिष्ठोत्पातेन नरकेषुरन्त्यमपि तावन्निर्निवारिका यादे कृष्णरत्नराशयस्ता एतु: नवप्रमाणानि नवाधिष्ठायकानि या सुरमकुष्यास्त्यागमकरणात्तुद्गमूमवकरत्नाधिष्ठायकवशात् सुपिति केनापि प्रकारेण नरकेषु, वैताढ्यमध्यकानि तत्तत्र तु पश्चाद्यथास्थितिवर्तपीति ॥

प्र० ४१४–ननु पञ्चाशकगतपञ्चप्रतिमाधिकारोक्तरूपेण स्वदारेभ्योऽपि निवृत्तानां श्रमणोपासकानां तुर्याणुव्रत स्याद्वा ? स्याच्चेदतिचाराः कतीति ? चेत्।

उ०–स्वयं ब्रह्मचारित्वेन मैथुनप्रवृत्तकुटुम्बगार्ह्यांश्च त्रिविधं त्रिविधेन ब्रह्मचर्यस्याभावात्स्वदारसन्तोषाणुव्रत परिणीतस्य स्वदाराणामिव स्यु पञ्चाप्यतिचारा, पञ्चविधाऽपि प्रवृत्तिरतिचाररूपा परममनाभोगादिना स्वदारसन्तुष्टपरदारविवर्जकानां त्वाभोगेऽपि ते स्युरिति ॥

प्र० ४१५–ननु श्रमणोपासकस्यानङ्गक्रीडा कथमतिचारः ? प्रतिज्ञाया अनतिक्रमादिति चेत्।

उ०–सत्य, तथाप्यास्यपोस्यसेवारूपाऽनङ्गक्रीडैवानङ्गत्वात् योरिति ॥

प्र० ४१६–ननु स्वदारसन्तुष्टपरदारविवर्जकयोः परविवाहकरणं कथमतिचारः ? प्रतिज्ञायास्तत्करणेऽप्यविराधनादिति चेत्।

उ०–सत्य, पुंस्त्रियोः संयोगकरणं पुण्यकर्ममिति मत्वा परेभ्य उपविश्य महती दारिका दीयतामस्मै इति कारयति तं तस्य तदतिचाररूपमेव श्रमणोपासकाचारातिक्रमादिति ॥

प्र० ४१७–ननु विषयपिपासातिरेकेण चतुर्थ्यां न प्रदेश स्थाने कामभोगतीव्राभिलाषस्य प्रोच्यतेऽतिचारत्वया तत्कथमिति ? चेत्।

उ०-सत्य, कामभोगासक्तिजन्यैव संयमापरिणति, नैव चातिचारे कामभोगासक्तिरुक्ता किन्तु तीव्राभिलाप, एव च तुर्याणुव्रतवता दिवा ब्रह्मचारिणा रात्रौ च कृतपरिमाणेन अन्यथा स्यादतिचार इति विषयासक्तिसद्भावे कामभोगतीव्राभिलापवर्जनमिति ॥

प्र० ४१८-ननु नवविधे परिग्रहे रूप्यसुवर्णयो पृथग्ग्रहाद् धनशब्देन किं ग्राह्य? वाहनवृक्षादीनां क्वान्तर्भाव?इति चेत्।

उ०-तत्र धनशब्देन गण्यधार्यपारिच्छेद्यमेयरूपं सर्वं व्यवहार्यं गण्यते, द्विपदेत्यस्य चोपलक्षणत्वाच्चतुष्पदापदानामपि ग्रहणाद्वाहनादयोऽपदे, कार्षापणदीनारादीनि तु कुप्ये इति ॥

प्र० ४१९-ननु पंचमेऽणुव्रते परिग्रहस्य परिमाणस्वीकारात्तदतिरिक्तस्य वर्जनाद् युक्त तस्य विरताविरतत्व, पर हिंसादिषु संकल्पारम्भादिवर्जनमात्रस्य व्रतत्वात्कथ तेषां विरताविरतत्वमिति ? चेत्।

उ०-सत्यं, स्थूलसङ्कल्पगवित्यादिभिर्विशिष्टत्वमेव विरताविरतत्वं द्योतयति, परं हिंसादीनामनर्थानां मुत्कलानामहिंसादिषु धर्माभिमानिनां वर्जनं, अत्र त्वर्थानर्थभूतानामपि धनादीनां धारणमिति धारणेतराभ्यां व्रतादानमिति ॥

प्र० ४२०-ननु दिक्परिमाणादीनि त्रीणि गुणाय व्रतानि गुणव्रतानीत्युच्यन्ते, तत्र को गुणशब्दार्थ ? कथं च गुणकारितेति ? चेत्।

उ०-गुणशब्दोऽत्र भावनार्थ, यथा चेर्यादीनामहिंसादरार्थं भावना तथा दिक्प्रमाणादीनामपि त्यक्तेतरहिंसाक्षेत्रगमनवर्जनेनाद्याणुव्रतस्य भावनं, यद्यपि मृषावादादयोऽपि तत्रत्या न स्युरेव, परं तेषां कन्यालीकादिविषयत्वात्तेषां तत्रागमने तद्विषयकप्रवृत्तिसम्भवाद् गौणत एव तैस्तेषां भावनमिति, अत एव सचित्तभक्षणादयः कन्दर्पादयश्च दिगतिक्रमणवत् हिंसाप्रसङ्गेनैवेतरयोरप्यतिचारा इति ॥

प्र० ४२१-ननु क्वचित् 'पंचाणुव्वइयं सत्तसिक्खावइय' मित्युक्त्वा दिक्परिमाणादीनि त्रीणि शिक्षाव्रततयोच्यन्ते, तत्कथं तानि गुणव्रतानि कथ च शिक्षाव्रतानीति,? चेत्।

उ०-अणुव्रतानां श्रमणोपासकधर्मे यावज्जीवं प्रतिज्ञानं, गुणव्रतानां तु प्रायो यावज्जीवमिति तानि भवन्तीत्वराण्यपि, तत्र

उ० - इच्छाकारादिचक्रवालसामाचारी प्रतिलेखनादिका च सामाचारी समाचारश्च पदविभागरूपप्रायश्चित्तविधानस्य त्रयमपि वाच्यम् ॥

प्र० ४२६-ननु सामायिकं कुर्वन् श्राद्धो मुकुटमपनयति नवेति ? चेत्।

उ०-तत्र मतद्वयं, एकं तावदपनयतीति, द्वितीयं तु वैपरीत्येनेति, अधुनातना पादघटिका त्वन्यैवेति तदुत्तारणं सामायिक विदधानस्य, न चैत्यालयं प्रविशत इति ॥

प्र० ४२७-ननु अविराद्धश्रामण्यानां श्रमणानां जघन्यत सौधर्मे उत्पात', श्रावकाणामप्यविराधकानां तत्रैवेति कश्चिदस्ति विशेषो नवेति ? चेत्।

उ०-तत्र श्राद्धानामेक पल्योपमं स्थितिः, साधूनां तु पल्यपृथक्त्वमिति विशेष इति ॥

प्र० ४२८-ननु विराधकानां तेषां द्वयानां का गति· प्रेत्येति ? चेत्।

उ०-तथाविधानां श्रावकाणां व्रतस्थोऽपि, साधूनां तु तथाप्रकाराणामेकैव देवगतिः, अत एव दुर्गृहीतश्रामण्यानां मिथ्यादृशामपि देवत्वाप्तिनियमः, प्रव्रज्यां चातस्ते लान्ति ॥

प्र० ४२९-ननु सामायिकचारित्रस्वरूपद्वयं सावद्यवर्जनमनवद्यासेवनं च, सामायिकसूत्रे तु सावद्यस्यैव प्रत्याख्यानं तत्कथमिति ? चेत्।

उ०-तत्रापि 'करेमि भंते सामाइयं' इत्यनेन क्रियत एवानवद्यासेवनप्रतिज्ञा, प्राक्कृतिस्त्वनवद्यासेवनप्रतिज्ञाया लघुत्वात्, न चानवद्यासेवनसावद्यप्रतिषेधौ परस्पराविनाभूतौ, अर्थान्तररूपौ वेतिज्ञापनाय वेति ॥

प्र० ४३०-ननु 'सावज्जं जोगं पच्चक्खामि'त्ति प्रतिज्ञाया करणान् ममत्वादि चेत् सावद्यं तर्हि प्रत्याख्यातमेव, नो चेत् 'सव्व सावज्ज'मित्युक्तौ को विरोध· ? इति चेत्।

उ०-सत्यं, ममत्वादि सावद्यरूपमेव, न च तद् धारयन् श्राद्ध, 'सव्वं सावज्ज' ति प्रत्याख्याति, अनुमोदनाया अप्रत्याख्यानाच्च द्विविधत्रिविधमेव स सावद्यं वर्जयति, एकादर्शी प्रपन्न

प्रत्याख्यानात् त्रिविधत्रिविधेन सामायिकं, परं स तु श्रमणरूप एव, अत एव पूर्वानुमतादिरयाणोऽस्य भवन्न त्रिविधत्रिविध प्रत्याख्यानमविषयं स्यादित्य, न तु सावद्य, तथा च न श्रमणोपासकस्य 'सर्वं सावद्यं' इति वक्तुमुचितमिति ॥

प्र० ४२१ ननु स्थूलमृषावादस्य कथं द्विकपरिमाणं पचाति धारता? सर्वथापि ननु तन्नायादिति चेत्।

उ०—सत्यं, अनुमतानां यावज्जीविकत्वात् तेषु सम्भवः, यावज्जीविकद्विकपरिमाणेऽपि न सम्भवः, स्वार्थे तु तस्मिन् करावितिकिंवदिति भवेत् सातिचारः। ननु त्रिंशतिक्रमकतया स्तेनाहृतस्य मृषावादयोरतिप्रतिचारेषु ऊर्ध्वदिगतिक्रमादिषु समावता? इति मावे परिमाणव्यतिक्रम, भवये च कामार्थक मद शब्द इति तदतिक्रमार्थे द्वारं गृह्यत इति सुधीभिश्चिन्त्य, मनुरगुरुत्वात् तु त्याज्या सर्वथाऽपि ॥

प्र० ४२२ ननु सचित्तप्रतिबद्धयोरतिचारा उपभोग परिमाणव्रते कथं? श्रमणोपासकानां सचित्तस्यानावश्यक स्यादसमर्थेन।

उ०—सत्यं, ते त्रिविधाः, सावद्यस्य सचित्तस्य बहुसावद्य मांसमद्यपयोम्बुपयादिश्च वर्जनात्, तत्र सचित्तवर्जकस्यैते तदनुसारेणान्येषामन्ये ऊह्या इति मद्यमुख्यमांसादिविधिपरिमाण करस्यापि ॥

प्र० ४२३—अन्यंगारकर्मादीनां पञ्चदशानां कर्मादानानां बहुसावद्यत्वेन वर्जनीयत्वे कथं श्रमणोपासकानां निर्वाहः? व्यापित्वात्तेषामिति चेत्।

उ० — भाग्ये तायविस्थोपारमेव ग्रासाच्छादनमात्रसन्तुष्टे सौभाग्य अल्पसावद्येषां परीक्षकरत्नधाप्यिक्षप्रयोगप्रयोजक मासान्नमात्रकपूर्वमीतवस्त्रघृतादिधान्यरत्नसुविपूगफलादिभिरेव धारेजीविका कार्या ॥

प्र० ४२४—ननु कैन्द्रादिभ्यस्सवीपोपमे को विशेष? इति चेत्।

उ०—आद्ये दासादीनामाय विक्रीणीते परस्मिन् स्थापयत्वात् स्थापयित्वा तत् कुशीलेन निर्वहतीति स्पष्टो विशेष इति ॥

प्र० ४२५ — ननु यथा परवीवाहकरणममर्थदण्डभूतं तुर्याणुव्रतातिचारतयोक्तं तथाऽन्यानामीत्यमर्थदण्डरूपाण्याद्या णुव्रतातिचारेष्वेव किं न पठ्यन्ते? इति चेत्।

उ०-सत्यं, त्रसस्थावराणामुभयेषामपि वधाद्यनर्थदण्डतयोच्यते, अत एव वल्लरादिज्वलनचिन्तनप्रासादस्तम्भार्हवृक्षोपदेशाद्यप्यत्र त्यज्यत इति॥

प्र० ४३६ – ननु खाद्या आख्यान्ति यद्-आवश्यकवृत्ति पञ्चाशकनवपदप्रकरणादिषु स्पष्टतयैव सामायिकस्य विधौ सामायिकोच्चारादनन्तरं ईर्याप्रतिक्रमणं प्रतिष्ठित तत् तपोगच्छीया अपलपन्त इति चेत्।

उ०-सत्यं, तेषां सर्वेषां मूलभूता आवश्यकचूर्णिरेव, तत्र च सामायिकोच्चारादनन्तर चैत्यवन्दन वसते प्रमार्जनं चोक्त तदनन्तरमाचार्यादिपार्श्वे आलोचन तेषां वन्दन च विधातु प्रागीर्याप्रतिक्रमणं प्रोक्त तच्च न मन्वते खाद्या न चैव विदधति, किञ्च-तत्र सर्वसामायिक पाठाच्छ्रावकसामायिकपाठो भिन्नो दर्शितस्तत्रैव कृत्वेतिपदस्यान्वय पूर्यते, 'जइ चेइयाइ'मित्यादिना नव्यं सामायिकविधेरुत्थाप्यते प्रकरण तच्चावान्तर चैत्यवासपोषणभिया वृत्त्यादिषु नोक्तं, तत्रापि कृत्वेत्यनेन सामायिकविधेः पूर्णतामाख्याय 'तओ पच्छे'त्यादिनाऽऽलोचनवन्दनयोः प्रकरणमारब्धं तत्रोक्ता चेर्या, परं कदाग्रहग्रस्ता विपर्ययकरणविचक्षणा न चिन्तयन्त्येव यथार्थं प्रकरणविधिं च प्रत्युत सत्पथस्थानलिकमुपालभन्ते इति॥

प्र० ४३७-ननु पौषधं वर्णयतोन्मुक्तमणिसुवर्णेतिपदेनाभूषणत्यागोऽभिधीयते, स कस्मिन् पौषधेऽवतार्य ? इति।

उ०-स्नानमर्दनादित्यागवच्छरीरसत्कार इति॥

प्र० ४३८-ननु प्रतिपन्नसामायिकेन व्याख्यानं श्रूयते नवेति ? चेत्।

उ०-सामायिकप्रतिपत्तेराद्यं स्थानं साधूनामुपाश्रय, तत्र च 'पुच्छइ पढइ चे ति स्पष्टो निर्देश, चैत्यगृहपौषधशालास्वगृहाणि त्वेकैकाभावे एव, प्रश्नानामुत्तराणि अन्यच्चा साधुधर्ममयं यद्व्याख्यानयेत् तच्छ्रवणमेव पाठवत्सामायिकस्य कार्यमिति पौषधस्य प्रतिपत्तौ चैत्यगृहसाधुमूलस्वगृहपौषधशाला इति स्थानक्रमो दीर्घकालीनत्वात्पौषधस्य कार्यं च 'पढंतो पुत्थगं वा वायतो धम्मझाणं झियायइ'त्तिवचनात् पाठपुस्तकवाचनधर्मध्यानरूपाणीति, सामायिके पाठश्च मुख्यः, 'साहू पज्जुवासामि'त्ति पर्युपासनायाश्च फल, 'विनयफलं शुश्रूषा गुरुशुश्रूषाफलं श्रुतज्ञान मित्यादिवचनाद् गुरूपदेश एवेति॥

उ०-सत्यपि तथात्वे सर्वविरतेरभावान्न तथाभेदौ, ततश्चाश्रवद्वारविवर्जिनामेव तथाभेदोक्तेस्तद्वर्जनस्यानूनो महिमा ॥

प्र० ४४४-ननु प्रणिधानेति कोऽर्थः? यत 'अनेनात्मन सर्वथा सम्भेदस्तदभिधेयेन चाभेद इति चिन्तन'मिति श्रीहेमाचार्या, निरोधो मनस इति चूर्णिकारादय इति चेत्।

उ०-सत्य, निरोध इत्येव तस्यार्थ, श्रीहेमाचार्यैरर्हति मनसो निरोधमाधायोक्तं चूर्णिकारादिभिश्च मनोवाकायनिरोधमिति ॥

प्र० ४४५-ननु सामायिके स्मृतेरकरणता पौषधे चानाभोग इत्यतिचारयो कथं भिन्नत्वमिति ? चेत्।

उ० – सामायिकस्य प्रायोऽल्पकालीनत्वात्तथातिचार', प्राग्व्रतेषु निर्वृत्तिमात्र स्वीकृतं, अत्र तु सावद्यनिवृत्त्या सहानवद्यप्रवृत्तिरपि स्वीकृतिमार्गमानीतेति सततजागृतिग्रह, पौषधे च सततप्रवृत्तव्यापारस्य त्यागे संस्कारबलादनाभोगसम्भवस्तद्विषय इति योग्यो भेद ॥

प्र० ४४६-ननु देशावकाशिकं कियन्तं कालं यावद्भवतीति ? चेत्।

उ०-सामायिकादीनि चत्वारि शिक्षाव्रतानीत्वराणि, तत्र सामायिकं सावद्यपरिहारानवद्यासेवनरूपं मुहूर्त्तादारभ्याहोरात्रं यावत्पौषधोपवासातिथिसम्भागौ तु प्रतिनियतदिनमानायेव, देशावकाशिकं दिक्संक्षेपरूपं चेद् दिवसमानं, सर्वव्रतसंक्षेपरूपे चूर्णिकारोक्ते तु अन्तर्मुहूर्त्तात्पक्ष यावन् मानं स्यात् ॥

प्र०३४७-ननु मुहूर्त्तमानं सामायिकं नियतसमय एव क्रियते, येनानवस्थिततया तस्य करणे तस्यातिचार. कथ्यते इति चेत्।

उ०-प्रतिदिनं न करोति, द्विसन्ध्यं न करोति, सव्यापार' सन् मुहूर्त्तादूनमेव तिष्ठति, तदाऽनवस्थितकरणतेति ॥

प्र० ४४८-ननु यन्निर्धारितकालं यावत् समग्रं दिवसं रात्रिमहोरात्रं कायोत्सर्गेण स्थीयते, तत् कस्मिन् व्रतेऽन्तर्भाव्यते ? इति चेत्।

उ०-चेष्टाकायोत्सर्गास्तावत् प्रायश्चित्तरूपा इति ज्ञानाचारादिषु यस्य शुद्ध्यै य स तदन्तर्गत, अभिभवकायोत्सर्गस्त्वनशने सलेखनायां च, अनियतास्तु ते 'पडिमं च तहा ससत्तीए'त्ति वचनाच्छ्रमणोपासकानां देशावकाशेऽन्तर्भाव्य, श्रमणानां भगवतां त्वभिग्रहाख्ये करणसप्ततिभेदे कायक्लेशतपसि च, क्रकचदारुदारणोपमानं तूर्ध्वतासामान्यात् तपोरूपत्वाच्चाष्टकर्मदाहदावौपम्यं चेति ॥

प्र० ४५४ – ननु नियन्त्रितानाकारयोराद्यमाकारद्वयं स्यान्नवेति ? चेद् ।

उ०–महत्तराकाराद्या एव न स्यु , तत्र नियन्त्रिते ऽपयोगवैशिष्ट्यान् महत्तराकारस्याप्रसंग एव करणात् , स्यात् प्रसंगे सूक्ष्मप्रणिधानवत्तद्रक्षणे यत्न , इतरत्र तु प्रसंगाभाव एव, सर्वसमाधिं तु वीर्येण रक्षत्येव, आद्ये तु स्यातामेवाकारौ द्वयोरपीति सम्भाव्यते इति ॥

प्र०४५५-ननु साधूनां सर्वसावद्यत्यागवत्सामायिकप्रतिज्ञया वैषम्यस्य त्यागात् मुहूर्त्तादिकमनाहारताप्रतिज्ञा कथ घटते ? इति चेत् ।

उ०–रागद्वेषौ यत्र तद्वैषम्य त्याज्यं, वृद्धिमप्रमादस्य जनयति यत्तत् न त्याज्यं, अन्यथा मुमुक्षुताविविधतप परमेष्ठिनमस्कारस्वाध्यायध्यानादिकं यावत्साधुत्वमपि त्याज्यं स्यात्, तपश्च नमस्कारादिक निर्जराहेतु , वर्षशतवेद्यनारककर्मनिर्जरणादिभावात् तपस्वीति साधूनां यशस्विन्नाम, अन्ततोऽभक्तार्थानशनादिष्वपि वैषम्यस्यापातात् हिंसादिरात्रिभोजनान्तानामपि परिहारे वैषम्यस्य भावापत्तेर्न स्युर्महाव्रतान्यपीति युक्तमेव नमस्कारसहितादि ॥

प्र० ४५६-ननु निमन्त्रणपिण्डो निषिध्यते शास्त्र, यथासविभागे च 'साहु पडिस्सयं गओ निमंतेति'त्ति, तत्कथमिति।

उ०-निमन्त्रय तदर्थं कृतपिण्डस्य निषेधः,न तु निमन्त्रणस्य, तस्य त्वावश्यकत्वं, प्रतिश्रयगमन प्रगे भिक्षाया अकालत्वादिति॥

प्र० ४५७-ननु साधूनामभावे विशुद्धभावेन दिंगालोक क्रियते, यथासंविभागव्रते तत्कि तावता भवेद् व्रतमिति? चेत् ।

उ०-सत्यं, साध्वभावेऽपि पौषधश्चैत्यगृहादिषु कार्यं एव, पौषधपारणे चावश्यं दत्त्वैवं भोक्तव्यमन्यदा तु भोजनात् पूर्वं पश्चाद्वा यथायोगमिति, नियमात् पौषधपारणे साध्वभावे कार्य एव दिगालोको विशुद्धेन भावेन, तस्मिंश्च दानतुल्यं फल, साधनाभावादेवाऽदानादिति, अतिथिसंविभागव्रतं तु यथासन्विभागदानादेव ॥

प्र० ४५८-ननु कालातिक्रमोऽतिचार. कथं ? भिक्षाचराणां भिक्षाकालेऽतिक्रान्ते एवानगाराणां भिक्षाग्रहणादिति चेत् ।

उ०-सत्यं, प्रतिपन्नप्रतिमादीनां तथात्वेऽपि गच्छवासिनां नमस्कारसहितकालाद्यावदन्त्यमहस्तावद्यथायोगं बालग्लानवृद्धासहिष्ण्वादीनां भिक्षाकालत्वात् , यथा तत्तन्निवासापेक्षया-

चारित्रभङ्गस्तद्वत् पौरुष्यादिप्रत्याख्याने महत्कार्यसमाधौ अपवादेन कल्पिकी भविष्यति, किमाकारस्थामिति? चेत्।

उ०-सत्यं, सामायिके हि प्रत्याख्यानद्वयं ज्ञानादिलाभस्य सर्वसावद्यत्यागश्च(स्य) एवं च ज्ञानादिलाभस्य प्राक् प्रत्याख्यानात्तल्लाभमन्तरैव सर्वसावद्यानां त्याग इति पर्यवसानादपघादपदेन तन्नियमन तदेव काल्पिकी सेवा, अत्र त्वेकमेव प्रत्याख्यानमिति वाध्यवाधकाभावादावश्यकताऽऽकारयोर्महतोरपीति न संगतिमतिक्रामति ॥

प्र०४६४-ननु प्राभातीयायामपराहूणीयायां च प्रतिलेखनायां भाजनादीना वहुप्रतिपूर्णा पौरुषीति पठ्यते परं तत्कदा कदेति चेत्।

उ० - प्रगे ऊनायां पौरुष्यां, अपराहूणे किञ्चिदधिकायां तृतीयायां व्यतीतायां, तत्रावशिष्टदिनभागज्ञापनायैतद्वचन प्रगे गतदिनमानवच्च इति ॥

प्र० ४६५-ननु नमस्कारसहिते पौरुष्यादिषु चानाभोगे समानैव प्रवृत्तिर्भेदो वेति? चेत्।

उ०-नमस्कारसहिते स्मृते नमस्कारं कृत्वा जेमति पौरुष्यादिषु संदिश्य मिथ्यादुष्कृतं कृत्वा च जेमति, आद्ये लघु कालो द्वितीये महानिति द्वितीये संदेशनादि।

प्र० ४६६-ननु प्रत्याख्यानस्य फलं तृष्णाविच्छेद प्रशमादयश्च कथ्यन्ते, तत्कथमिति ? चेत्।

उ०-प्राणातिपातादीनां प्रत्याख्याने सर्वथा देशेनाश्रवनिरोध, आश्रवाश्चाधमाध्यवसायास्तेषां व्यवच्छेदः स च प्रशमफलः, प्रशमोऽत्रानाकुलता, आद्यकषायाणां शमस्तु प्रागेव जायते, देशसर्वोत्तरगुणप्रत्याख्यानेषु तद्गमनाद्याहारादितृष्णानां व्यवच्छेद इति, ततश्च निर्जराद्या ॥

प्र० ४६७-ननु स्वाध्यायस्यासाधारणकर्मक्षयकारणत्वेनासम तपस्त्वं तर्ह्यकालादिभिर्व्याघात. कथमिति ? चेत्।

उ०-कालयोगविनयबहुमानादियुतस्यैव तस्य तथात्वात्, इतरत्र त्वेकाशने तद्व्याघातवर्जनार्थं स्थानान्तरं गत्वापि जेमनं, स्वाध्यायवैयावृत्त्ययोरेवैकतरकर्त्तव्यताया दिनारम्भे पृच्छाभावात् ॥

प्र० ४६८-ननु 'आयामेण अबिलेण य आहारो'त्ति वचनात् किं द्रव्यद्विकेनैवाचामाम्लमिति न स्वीक्रियते ? इति चेत्।

उ०-'अंबिलेण अंबिलाणि आयबिलपाओग्गाणि अणेगानि' इत्याद्युक्त्या न द्रव्यद्वयं किन्तु द्विस्वरूपं वस्त्विति समयं सरहस्यं सरलमनवबुध्यासद्ग्रहावेशाद् भणनं मिथ्यात्वमेव, तत्रापि समयनाम्ना चेत् निस्सीममेव तदिति ॥

प्र० ५६९–ननु दशमादितपसि न क्रियते पारिष्ठापनीयं तत्किमाद्यादेव दिवसाच्चतुर्थादिदिनाद्वेति ? चेत् ।

उ०–आद्यादेव दिनात् यस्मिन्नेव दशमादितपसां प्रत्या-ख्यानात् त्रिषु दिवसेषु क्रियाचित्परिष्ठापनिकं भूतं स्याच्चतु-र्थादिदिनेषु विकल्पस्यं न स्यादत इति ॥

प्र० ५७०–ननु विकृष्टतप किमष्टमादि दशमादि वेति ? चेत् ।

उ० विशेषतोऽष्टमादि यतः अष्टमस्य पर्युषणायां नियता कर्तव्यता, तत्र न यतो रोगादिनिमित्तैः भविष्यति वा तेनैव तदनागतादिकान्तमप्यष्टमं कृत्वा समाचरन्त्यष्टमादितपसि करणे भाति ये कारणमादितं 'पज्जोसवणागहणं पाय विकट्ठ कीरए, सम्म अट्ठमो भट्ठं' इत्यादेशः, पाक्षिकादिगतचतुर्थादिकम् अष्टमा पर्युषणादिवसेन त्वरितमिष्टमिति चातुर्मासिकादिगततपस्यापि तु उपलक्षणमात्रम्, तदोऽधिकारोऽपि भाषान्तरे 'केवि आयरिया भट्ठ-माइ पभणति केइ दसमाइ' इत्युक्तमेव ॥

प्र० ५७१–ननु विष्यविषी को भोजनविषयोचित तपुरस्सर प्रत्याख्यानं परिष्ठापनीयमिति चेत् ।

उ०–अष्टपदकमिव कन्द इव सिद्धवादितमिव यत्तु परित गमाणात्मयस्तमं यावत् अन्यतरदिशो वाऽन्यतरदिश यावत्समग्र वा यथा पादितं तथा तद्विधिमुक्तं भगवाक्षकाकादिवादितमिवार्थं विवर्जितादितं यत्तद्विधिभुक्तमिति, विधिपूर्वकं त्वनुज्ञातं नाऽपमितरत्या चेतरत् ।

प्र० ५७२–ननु शिष्येण प्रत्याख्यामीति व्युत्सृजामीति च भणनात् आचार्येण तु प्रत्याख्यातीति व्युत्सृजतीति च भणना युक्त शिष्यस्य प्रत्याख्यातृत्वमाचार्यस्य प्रत्याखापयितृत्वं, परं शास्त्रेषु व्यत्ययेन दृश्यते, तत्र को हेतुरिति ? चेत् ।

उ०–संवेगमीमांसापेक्षायां स्वमत्याख्यानमागमापेक्षया शिष्यः प्रत्याख्यापकः, प्रत्याख्यानसूत्रोच्चारणे आचार्यस्य प्रेरणात् तथा प्रेरितश्चाचार्यं उच्चारयति प्रत्याख्यानसूत्रमपीति स प्रत्याख्याता, तदपेक्षया तु आचार्यः प्रत्याख्यापकः शिष्य एव च प्रत्याख्यातेति।

प्र० ५७३–ननु 'जो जाणई' इत्यादिषु भङ्गेषु प्रथमस्तु शुद्ध एव, अन्त्यस्त्वशुद्ध एव परं द्वितीयतृतीयभङ्गौ आचार्य-शिष्ययोः समानोऽस्ति वा विशेष ? इति ।

उ०-शिष्यापेक्षया द्वितीयभङ्गे आचार्यं ज्ञापयित्वा प्रत्याचक्षाण शुद्ध शिष्यः, आचार्यापेक्षया कारणे शुद्धिराचार्यस्य नान्यथा, तृतीयभङ्गे प्रभुमन्दिराद्यपेक्षया शुद्धि शिष्यस्य आचार्यस्य तु शुद्ध एवेत्यस्ति विशेषः ॥

प्र० ४७४-ननु 'एयारिसे पंचकुसीलरूवे'त्ति पापश्रमणीयगाथया पार्श्वस्थादीनां निकृष्टसाधुत्वमुक्त, तत्कथं न ते तथा-संयमवन्त ? इति ।

उ०-सत्य, परं पार्श्वस्थादीनां निकृष्टसाधुता, वेषधारिण साधव इति लोकव्यवहारेऽपि लोकास्तमधमं वेषधारिण मन्वते इति दर्शनाय, न संयमसत्त्वाय ॥

प्र० ४७५-ननु प्रसिद्धस्य प्रणिपातदण्डकस्य किमिति शक्रस्तवेत्याख्या, सर्वैरपि स्वर्गाधीशैरनेनैव भगवत स्तवविधानादिति चेत् ।

उ०-सत्यं, दक्षिणमिदं लोकार्धमस्य च स्वामी शक्र इति तन्नाम्ना स्तवाख्येति ॥

प्र० ४७६-नन्वावश्यकादौ पठ्यमाने शक्रस्तवे किमिति 'दीवो ताणं सरणं गई पइट्ठे'ति न पठ्यन्ते ? इति चेद् ।

उ० - भगवद्गणभृत्कृततद्रचनायां तदभावात् न चैत्यवन्दनशक्रस्तवादिषु तानि पठ्यन्ते, विरतेरर्हो नरभव एव द्वीपाद्युपम , स च प्रार्थनीयोऽप्राप्तत्वात्सुपर्वणां, नराणां तु स वर्त्तमान एवेति न तत्प्रार्थमेतेषां, ततश्च नरभवो समुद्राद् द्वीप इव भिन्नो देवभवादाश्वासस्थानं च कर्मारिकृतानर्थात् परित्राण नरभव एव, तत्रैवाक्रियत्वभावात्, सम्यग्दर्शनादिसाधनशासनस्य शरण नरभव एव, नहि देवलोके देवानां सम्यग्दृष्टित्वेऽपि शासनप्रवृत्ति , निर्ग्रन्थतायास्तत्राभावात् , 'न विणा तित्थं नियंठेहिं'ति वचनाच्च विरहय्य निर्ग्रन्थान्न तीर्थमिति नरभव एव शरणं, विहाय नरभवं नान्यत्र सिद्धिगतिरिति परमार्थेन मनुष्यभव एव गतिः, आजवंजवीभावस्य क्षयकरणेनानन्तकालीनस्थानप्रतिष्ठालाभोऽपि नरभव इति प्रतिष्ठारूप स नरभवः, प्रार्थनीयत्वादेव स्वेषां द्वीपादीनां प्रथमांतता, नमस्कार्येषु तु पदेषु चतुर्थ्यर्था षष्ठी, नरभवलाभहेतुता च भगवतामर्हत्त्वादिगुणेभ्य इति जिनेश्वराणामात्मगुणस्तुतेरप्रतिहतज्ञानदर्शनधरेत्यादिभ्यः प्रागुपन्यास, एषां प्रभावाच्चार्हन्त्यादीनां जातत्वात् प्रणिधानमिवान्त्ये च स इति सम्भाव्यते ॥

प्र० ४८१–ननु यत्संयममुपकरोति तदुपकरणमिति कथ्यते, न चास्ति किञ्चिद्वस्तु जगति यद्वैराग्यादिहेतुतामागम्य संयम नोपकरोति, न चास्ति मुखपोतादिषूपकरणेष्वपि तदुपकरणं, यन्नातिरिक्तायतपरिभोगादिभिर्भवति संयमस्य बाधकं, तत कथं मुखपोतादीनामुपकरणतया प्ररूपणादीति ? चेत् ।

उ०–सत्यं, संयमस्य रक्षणवृद्ध्यादिषु मुखपोतादीन्येवोप-कुर्वन्ति, तान्यन्तरेण तत्कर्तुमशक्यमिति योग्यमेव मुखपोतादी-नामुपकरणत्वेन प्ररूपणादि, इतरेषां संयमहेतुत्वमुपकरणानां चाधिकरणत्वं न वस्तुप्रभावजं किन्तु तदुपयोजकप्रभावजं, शास्त्रेऽपि 'जे आसवा ते परिस्सवे'त्यादि यदुक्तं तदपि तत्प्रवृत्तपरिणामप्रभवं, अन्यथा आश्रवपरिश्रवव्यपदेशस्यैवा-सम्भवः, कथं चोच्येत 'जे आसवे'त्यादि ॥

प्र० ४८२–ननु 'एगागी पासत्थो'त्याद्युपदेशमालागाथोक्तानि पञ्चपदानि प्रत्येकं संयमदुष्टताकारीणि समुदितानि वेति? चेत्।

उ०–प्रत्येकमेव संयमदुष्टताकराणि, इत्यादीनि तानि विशेषेण, सालम्बनेतरादिविचारस्तु तत्रापार्थक एव, सालम्बनानां पार्श्वस्थत्वादेरेवाभावात्, भङ्गानां पञ्चविंशतिरपि दोषयुक्तत्वा-द्विराधनापदमेव,न चैकाकित्वाद्यभावमात्रेण गुण आराधकता वा, अनेकाकिपार्श्वस्थादीनां विराधकत्वमेव यत इति, 'दुगमाई संजोगा जह तह गुरु'त्ति वचनमत्र ॥

प्र० ४८३–'ननु गच्छगओ अणुओगी'ति गाथया संयमा-राधकानां पञ्चविंशतिर्भंगा भवन्ति न वेति ? चेत् ।

उ०–'संजोगेण पयाण'ति शास्त्रकारवचनान्नैवाराधकभङ्गाः, सत्येव पञ्चकसंयोगे आराधनाभावात् पदानां तावत् संयोगे गुणवृद्धिस्तु स्यादेवेति ॥

प्र० ४८४–ननु क्रियाविचारे क्रियाहेतावौदारिकादौ क्रिया-कारके च जीवनारकादौ किमेकत्वबहुत्वाभ्यां प्रश्नचतुष्टयी ? एकवचनप्रश्नेनैव स्वरूपावगतेरिति चेत्।

उ०–सत्यं, शतमवन्ध्यं सहस्रमदण्ड्यमित्यादिको लौकिको नात्र कर्मबन्धविचारप्रधाने जिनशासने, न च लोकसांमत्यात् कर्मबन्धहेतुप्रवृत्तानामनपराधतेति सूचनाय ॥

प्र० ४८५–ननु किमिति सकषायस्यावश्य प्रथमक्रिया-त्रयसद्भाव ? इति चेत् ।

उ०–नहि कश्चित्स समयो भवति यत्र सकषायो रागद्वे-

प्र० ४८९–ननु अभव्यानां तदनुष्ठानं भवेन्नवेति ? चेत्।

उ०–मूलत एवाभव्यानां तात्त्विकमोक्षस्याश्रद्धानान्नैव मार्गान्तरीयमपि धर्मानुष्ठानं, आचारतस्तु यदि जिनोक्तानुष्ठानस्यापि नासंभव इति तत्सम्भवोऽपि ॥

प्र० ४९०–ननु क्वचित् 'नाणकिरियाहिं मोक्खो त्ति, क्वचित्तु 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग' इति, क्वचित्पुन 'नाण पयासय सोहओ तवो संजमो य गुत्तिकरो। तिण्हपि समाओगे मोक्खो जिणसासणे भणिओ'॥ त्ति, अपरत्र तु 'बन्धहेत्वभावनिर्जराभ्या'मिति, तत्किमेते उपदेशा वस्तुभेदापेक्षया नयभेदापेक्षया श्रोतृभेदापेक्षया वक्तिरिच्छाकृता वेति ? चेत्।

उ०–श्रोतृभेदापेक्षयेति गृहणीत, ये प्रव्रजितास्तेषामभ्युदयाय 'नाणकिरियाहिं मोक्खो'त्ति, तत्र ज्ञान-श्रुताभ्यास, क्रिया च–चक्रवालौघपदविभागसामाचार्यादिसाध्वाचाररूपेति, ज्ञानक्रियैकान्तवादिनां तदन्यतरप्रधानगौणवादिनां सम्यग्मार्गप्रतिपत्तये एतदेव वचः, ये च आदिधार्मिका शुक्लपाक्षिकत्वात् मोक्षलक्षणजिज्ञासावन्तस्तान् 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग' इति, दार्शनिकपर्षद्यपि परमार्थप्राप्तये तत्प्रतीतिश्चाप्रयत्नानामावश्यकतादर्शनायैतदेव, 'नाणं पयासय'मित्यादि तु ये बुद्धसमादेशाच्चारित्रान्तर्गत प्राग्बद्धकर्मकाष्ठनिचयचित्रभानूपम तपो दु खं औदयिक चेत्युदित्वा तदुपेक्षयामासुस्तान्प्रत्यात्मशुद्ध्यसाधारणकारणताया दर्शनाय अभिप्रेत्य च प्रत्याख्यानस्य क्षायोपशमिकतां, 'बन्धहेत्वभावे'त्यादि तु साधकतमकारणतादर्शनाय स्वस्वरूपेऽवस्थानमिति मोक्षस्वरूप तस्य स्वभावरूपत्वात् न तल्लक्षणं साध्यताकोटिमाटिकत इति, 'कृत्स्नकर्मविप्रयोगो मोक्ष' इति तु सम्यग्दर्शनादिभि स्वस्वरूपावस्थानस्वरूपमोक्षप्राप्तौ द्वारमिति ॥

प्र० ४९१–ननु जीवविपरीतोऽजीवस्तयोश्चतुर्दश चतुर्दशभेदा एव परस्परविरुद्धयो' पुण्यपापयोराश्रवसंवरयोर्बन्धनिर्जरयोश्च कथ न भेदसाम्य ? यतो भावास्तावन्त एवाभावा इति चेत्।

उ०–सत्यं, परं जीवादीनामजीवादिभिर्वैपरीत्यमस्ति यत्तन्न परस्परपदार्थविमर्देन किन्तु स्वरूपविमर्देन, यथा जीवस्योपयोग स्वरूप तन्नाजीवे, भावाभावसाम्यं तु पदार्थोपमर्देन वैपरीत्ये, यथा घटाघटयो, ये च जीववदजीवस्य भेदाश्चतुर्दश ते स्वतन्त्रा एव, न जीवभेदापेक्षिका, नवापि तत्त्वानि पदार्थरूपाणि नेतरथेति ॥

दाहारकस्यास्थ्यादिना बाधाऽसम्भवात् ॥

प्र० ४९७-ननु तैजसकार्मणे आश्रित्य कथं न पञ्चक्रियत्व, ? तत्सहभाविन औदारिकस्य विनाशादिति चेत्। सत्यं, औदारिकनाशेन तयोरनाशात्, अनादिके ते इति परितापनादि तु जीवाभिन्नत्ववदौदारिकादप्यभिन्नत्वादिति ।

उ०-क्रियाविचारश्च क्वचिदविरतिं क्वचिच्चाविवेकं क्वचित्पुन पूर्वभवं कुत्रचिदाश्रयं क्वचित्पुन साहचर्यमपेक्ष्य निमित्तभावापेक्षया पूर्वभवशरीरमपि क्वचिदपेक्ष्यते इति विचित्रविवक्षोद्भव कर्मबन्धस्तु क्व कियानिति तत्त्वविद्वेद्यमिति ॥

प्र० ४९८-ननु 'जे उ दाणं पससंति वहमिच्छति पाणिणो त्तिपारमर्षप्रवचनादसयतेभ्यो दानस्य निरूपणं प्राणिवधकारणतया प्राणवधजन्यपापैककारणमिति, पापकारणानां च निषेध आवश्यकोऽनगाराणां, त्रिविधत्रिविधेन हिंसाया विरतत्वात् तेषां, अनिषेधे तु सति प्रसगेऽनुमत्यापत्ते स्पष्टो व्रतभग इति।

उ०-सत्य, दानमात्रस्य निषेधार्थमिदं पारमेश्वरं प्रवचन त्वदुक्तरीत्या, अत्रासयतस्य गन्धोऽपि नास्ति, येन तदेव निषिध्यतेऽसंयतदान न शेषदानानि निषिध्यन्ते, सूत्रान्तरेषु सयतदानस्यैकान्तनिर्जरादिदीर्घादिशुभायुर्बन्धानां हेतुतया प्रतिपादनात्, निर्जरादिकारणानां च मोक्षार्थिभिर्विधेयत्वानियमाच्च न सुपात्ररूपसंयतदानं निषिध्यते इति चेत् ।

चिरं जीव, यत पौर्वापर्येणानुसन्धायोपदेशमिच्छसि न तु यथाश्रुतग्राहितया, परं तथात्वे सूत्रान्तरानुसन्धादक्षो भवान् अत्रत्यमेव सूत्रं नानुसदधासि तत्रास्ति कश्चिदान्तरो हेतु', यतोऽत्रैवाहुः सूत्रकारा-'जे य णं पडिसेहंति वित्तिच्छेयं करंति ते'त्ति, ततश्च त्वदुपक्षेन हेतुना दानोक्तौ यथा प्राणवधानुमतिर्दोषस्तद्वदेव तन्निषेधेऽपि वृत्तिच्छेदो दोषोऽनुसंहित एवास्ति। ननूभयतः पाशारज्जुरापतिताऽनिच्छतामपि नो गळे तत् किं साम्प्रतं करणं, साम्प्रत दानावसरे निषेधस्य तस्य तथोक्तौ न दोषाभ्युपगमे विधेयस्यापि तदवसर एवापातात् तदुक्त्यापि निर्गमनं उभयत• पाशाया रज्ज्वा इति निर्गतिका वयमिति चेत्। सत्यमेव निर्गतिका यूयं ये मार्गमार्षमनागता इति, प्राप्तपारमेश्वरपथां तु नैकतोऽपि पाश, सूत्रस्यैतस्यावबोधे याथातथ्येन त्रयोऽध्वानः, प्रकरणव्याख्याग्रन्थोक्तीनां त्रैविध्यात्, प्रथमस्तावद् दानश्राद्धान् ग्रामादिस्थानाश्रित्य स च सुपात्राय दाने आधाकर्मिकादे ते श्राद्धा अपि न श्रमणोपासकास्तेषां निर्जरास्तिपापपरिहारार्थिकैव यत

यति दान तस्य साक्षान्निषेधकस्य त्वनगारिता दुरापास्तप्रसरैव, तन्नैतत्सूत्रमनुकम्पादाननिषेधपरं कथमपि सम्भवति, वस्तुतो हिंसानिषेधस्तदुपदेशश्चानुकम्पाजनित एव, यतः 'सव्वे जीवावि इच्छन्ति जीविउं न मरिज्जिउं। तम्हा पाणिवहं घोरं निग्गथा वज्जयन्ति णं'॥ १॥ मित्यत्र परजीवनेच्छापूर्वकमरणपरिहारमिच्छूनां वधस्य वर्जनोक्तिरिति, ईर्याद्या अपि परप्राणापहारपरिहारपूर्वकरक्षणायैव, अत एव 'एगंतमवक्कमेज्जे'ति 'नो ण संघायमावज्जे'ति चैकान्तस्थापनसंघातमात्रवर्जने अभिहिते जन्मदुर्गत्यादिदुःखदूरीकरणायैव च भगवद्भिर्जिनेश्वरैस्तीर्थं धर्मश्च प्रवर्तितो क्षायिकसम्यक्त्ववत्कृष्णकृतेष्टिकासंचारणस्यापि भगवताऽरिष्टनेमिना सहायतया व्याख्यानादप्रतिहतप्रसरैवानुकम्पा सम्यक्त्वलक्षणमनुकम्पां विस्रतामिति ॥

प्र० ४९९–ननु पौरुष्यादिप्रत्याख्याने प्रत्याख्येयमाश्रित्यानाभोगादय आकारा कथ्यन्ते, त्रिविधाहारे तु मुत्कलमाश्रित्य यत पानकमाश्रित्येति 'पाणस्स लेवेणे'त्यादि चेति ।

उ०–तत्र प्रत्याख्येयाश्रिता 'अनाभोगेण वे'त्यादिना गता एवेति, मुत्कलमाश्रित्य 'पाणस्से'त्यादय आकारा इति ॥

प्र० ५००–नन्वाकाराणां हेयत्वमादेयत्वं वेति? ।

उ०–महत्तराकारादीनामादेयत्वं, एवं चाकारा इति मुत्कलतात्पर्यका इति न तेषामैकान्तिकी हेयताऽऽदेयता वा, लेपकृत्पानीयादि गृह्यत एव, न तत्र लेपालेपकृतो विशेष इति ॥

प्र० ५०१–ननु केयं वाचोयुक्तिर्यदुत्तरगुणरूपे इत्वरे नियतवस्तुगते च नमस्कारसहितादिके आकारस्वीकृतिस्तदितररूपे सामायिके तु न किञ्चिदिति, यतो ज्ञानादिरूपे सामायिकेऽपि सन्ति निद्राद्यास्ते सावद्ययोगप्रत्याख्याने च नद्युत्तरणादय इति चेत्ते तत्रापवादपदेन सविशन्ति, इमेऽपि तथैव सविशन्त्विति ।

उ०–सत्यं, ज्ञानादिसाध्यसिद्धये तदाचरणात् स्यात्तेषामपवादता, इमे तु अनाभोगाद्या न संवरसाध्यका इत्येषामेवाकारयुक्तता, सततप्रतिजागर्या हि समित्यादय इत्यसमितत्वादावविराधनेऽपि प्राणिनां मिथ्यादुष्कृतप्रायश्चित्तशोध्यत्वमिति ॥

प्र० ५०२–ननु 'समणोवासगस्स णं भंते तहारूवं असंजय अविरय अपडिहय अपच्चक्खायपावकम्मं फासुएण वा अफासुएण वा एसणिज्जेण वा अणेसणिज्जेण वा असण० जाव किं कज्जइ?

शस्त्रदानजपुण्याभिप्रायेण व्याख्याता यतस्तदा यवनानामवस्कन्देषु हिण्डूनां रक्षणाय राज्ञा तथासामर्थ्याभावात् प्रजाभि स्वब लेन यवनावस्कन्दस्खलनं पुण्यकार्यं मत तदर्थमस्त्रशस्त्रार्पण चेति तदभिप्रायतया गाथामिमां व्याख्याय मार्ग उपदिष्ट इति ॥

प्र० ५०४-ननु श्रमणब्राह्मणपरिवर्त्तनार्थं कृत आरम्भोऽर्थदण्डोऽनर्थदण्डो वेति? चेत् ।

उ०-नैकोऽपि, यतः श्रूयते श्रेणिकराज्यसममहार्घनामितो विभङ्गवान् देवताधिष्ठित सेचनकस्तां स्पृहणीया दशां तादृग्दानादवाप्तस्तिर्यक्त्वेऽपि, किञ्च-श्रीसूत्रकृताङ्गे क्रियास्थाने नागभूतयक्षहेतुकोऽर्थदण्ड उक्तो न तु श्रमणब्राह्मणपरिवर्त्तनाकृतः प्रत्युतानर्थदण्डे श्रमणब्राह्मणपरिवर्तना वर्जितेति ॥

प्र० ५०५-ननु 'दयावर धम्म दुगुंछमाणे'त्यस्यां गाथायामशील भोजयतो नृपस्य स्पष्टतया नरक फलमुक्तमिति ।

उ०-धर्मजुगुप्सादेस्तत्फलं तथाविधस्यैव तत्कर्तुर्नरक फलमुक्तमिति ॥

प्र० ५०६-ननु श्रीसूत्रकृतांगीयमार्गाध्ययने श्राद्धिकदानस्य पुण्यभावाभावप्रश्ने एकतरमपि वचनं न वक्तुमुचितमनगारस्येति प्रतिपादित, श्रीव्याख्याप्रज्ञप्तौ च सप्तमाष्टमशतकयो भूतप्राणजीवसत्त्वानुकम्पया सातवेदनीयरूपपुण्यबन्ध' प्रतिपादितस्तत्कथमिति ?।

उ० – प्रथम तावत् सूत्रकृतीयमार्गाध्ययनगतोऽधिकार आधाकर्मिकाहारगोचर, कूपादिगतेऽपि क्रियाजन्यतामधिकृत्य, प्रज्ञप्तौ तु प्राणाद्यनुकम्पारूपपरिणामजन्योऽधिकार, तत्र मार्गाध्ययनेऽपि पुण्याभावोक्तिस्तु निषिद्धैव ॥

प्र० ५०७-ननु मेघकुमारजीवो हस्ती प्रतिवर्षं तथाहिंसा प्रवृत्तो मिथ्यादृक् च, तस्य संसारपरित्तत्वकरणं मनुष्यायुर्बन्धादि च प्राणभूतजीवसत्त्वरूपशशकस्यानुकम्पाया जातं, तत्र तद्धिंसादीनां फलं किं नासादितमिति ? चेत् ।

उ०-सत्य, प्राणाद्यनुकम्पया तादृशं पुण्याद्यर्जित येन तत्प्रतिवर्षं क्रियमाणं स्वपातजं स्वप्राणव्यपरोपणादि च सर्वं न स्वफलायालम्भूष्णु, अत एव मिथ्यादृगाचरिताया अनुकम्पायास्तस्या भगवता श्रीवीरेण प्रशस्ताचरणतयोपन्यास कृतः। दृश्यतां ज्ञातधर्मकथाद्यमध्ययनमुत्क्षिप्तनामकमिति ॥

प्र० ५०८-ननु शास्त्रेषु 'समणं वा माहण वे'ति पदद्वयं साधोर्वाच्यत्वे किमित्युच्यते? इति।

स्तद्दौर्लभ्यदर्शनाय दृष्टान्तदशकमिति, परं श्रवणादीनामेकान्तिकतेति 'ण लहइ सुइ हियकरि'त्युक्तं, प्राप्स्यमानसम्यक्त्वश्च कर्मरिपुणाऽवश्य युध्यमान तद्वान्त कोटाकोटीसागरप्रमाणतनुत्वकरणादिति कर्मयुद्धक्षतये 'जाणावरणे'त्यादिगाथा, असयतत्वेऽपि बहुनिर्जराक परिणामो यान, अल्पबन्ध आवरणं, अपूर्वकरणं प्रहरणं, अनिवृत्तिर्युद्धकौशल्यं, नीतिरन्तरकरण, सम्यक्त्वमोहोदयो दक्षत्व, देवार्चाद्युद्यमो व्यवसाय, तत्त्वार्थश्रद्धानं शरीरं, शमाद्यारोग्यमिति मिथ्यात्वजये युद्ध, चारित्रकषायजये 'जीवो जोहो'त्यादि योजितमेव व्याख्याकारैरिति ॥

प्र० ५११–ननु 'दिट्ठे सुए'त्यादीनि सत्कारान्तानि सम्यक्त्वकारणानीत्युच्यते, पर तेष्वस्ति कश्चिद्विशेष ? इति ।

उ०–अस्तीति, दृष्टादीनि बाह्यनिमित्तानि, क्षयादीन्यान्तरनिमित्तानि, मनआदि प्राशस्त्य तु स्वरूपभूतमिति, अनुकम्पादीनि तु बाह्यव्याप्तिरूपाणीति न तानि नियतकारणनि क्षयादिवत्, दृष्टादीन्यहोरात्रचर्योपयोगीनि, अनुकम्पादीनि तु कादाचित्कानि कादाचित्कादरार्थं च तदीयं दृष्टान्तैकादशकं वैद्येत्यादि, आधिगमिकयोगीन्यभ्युत्थानादीनि चत्वारि, भावतश्चतुर्णां लाभोऽप्येतेभ्य सामायिकानां, तदर्थिनां तत आदरणीयान्येव ॥

प्र० ५१२–ननु 'सम्मत्तस्स सुयस्स य छावट्ठी सागरोवमाइ'ति या स्थिति सा कस्य सम्यक्त्वस्य श्रुतस्य वेति ? ।

उ०–औपशमिकमान्तर्मुहूर्तिकं क्षायिकं साधिकत्रयस्त्रिंशत्सागरस्थितिकमित्येतावत्स्थितिकं क्षयोपशमजमेव, देवभवे समग्रश्रुतानवस्थानात्, श्रुतमपि सामान्यमेवेति ॥

प्र० ५१३–ननु करेमि भते ! सामाइय' ति, 'सव्वं सावज्जं जोगं पच्चक्खामि'त्ति, द्वयो प्रत्याख्यानयोर्यावज्जीवतयेति योज्यमेकस्मिन् वेति ? ।

उ०–अत्र सामायिकशब्देन सर्वविरतेर्ग्रहणं चेद्योज्यं तत्पदमैहभविकत्वाच्चारित्रस्य, सम्यक्त्वश्रुते अपि चेत्तत्र तदा तत्पदं न योज्यं, यत उभयभविके ते, प्रतिज्ञाकृत्यपेक्षया वा योज्यं स्यात्, 'सव्व सावज्ज'मित्यादिना तु योज्यमेव, सर्वविरतिसामायिकेन नास्य गतार्थता, परिणतिप्रवृत्त्योर्भिन्नत्वात् ॥

प्र० ५१४–ननु श्रुतसामायिकतयाऽभिमतं श्रुतं सम्यगितरद्वा ? आद्ये, 'कालमणंतं च सुए'त्ति किं सम्यक्त्वान्तरात्पृथगन्तरं, द्वितीये तु सम्यक्त्वकाल एवान्तरं स्यात् नाधिकमिति ।

चक्षुःप्रत्यक्षेण जानातीति ?।

उ० – सत्य, अत्र हि हरिहरादीनामसर्वज्ञतानिश्चयायैवमुक्तम्, ते हि चक्षुर्दृष्टस्य प्रत्यक्षतावादिन, न च धर्मास्तिकायादिदर्शक वेत्तु शक्य, तथाज्ञानाभावात्, एवं च परमावधिमतां मुनीना परमाण्वादिपङ्क्तिज्ञानेऽपि न दोष, तत्त्वं त्विदमत्र-हर्यादयो धर्मादिकाश्च वेत्ति सतोऽपि, तत्र ते सर्वज्ञा इति, परमावधिमन्तस्तु स्वतीर्थ्या इति न तैरधिकारोऽत्रेति, नैश्चयिको वाऽणु

प्र० ५२०–ननु ज्ञानाधिकारे श्रीभगवत्यष्टमशतके किमिति रायप्पसेणइए'इत्युक्तं, नन्द्यामावश्यके च सविशेषं ज्ञानानां वर्णनादिति ।

उ०–नन्द्युद्भवात् प्राक्स्कन्दिलाचार्यैरनुयोगस्य निष्पादितत्वात्, श्रीदेवर्धिक्षमाश्रमणास्तु सिद्धान्तानां पुस्तकाकारेण पुस्तकप्रामाण्यपारम्पर्यविधातार, आवश्यकनिर्युक्त्यादि तु व्याख्यारूपमिति प्राधान्याद्वा राजप्रश्नीयेति, अतः पुरतोऽज्ञानाधिकारे 'जहा नन्दीए'त्ति स्पष्टमुक्तं, तत्रैतदधिकाराभावादिति ॥

प्र० ५२१–ननु सम्यग्दर्शनादिषु ये ये क्षायिके भवन्ति ते क्षायोपशमिकशुद्धावस्थारूपा न च क्षायोपशमिकभावे समुत्पन्ना ये गुणास्तेषां नाशकास्तथा ज्ञानदर्शनयोरपि किं नेति ?।

उ०–सत्यं, सम्यग्दर्शनादयो हि क्षयोपशममात्रापेक्षा जीवे भवन्ति, मत्यादीनि तु क्षयोपशमसहकृतेन्द्रियादिभ्य इति केवले मत्यादयो नेति, एतदपेक्ष जीवा मनुष्याश्च 'जे एगनाणी ते नियमा केवलानाणी'ति सिद्धाश्च 'एगनाणी नियमा केवलनाणी'ति च वच इति ॥

प्र० ५२१–ननु ज्ञानादिलब्धिदर्शके किमिति ज्ञानस्यैको भेदो दानादीनां तु पञ्चकमिति, किञ्च–चक्षुदर्शनाद्याश्रितां दर्शनलब्धिमनुक्त्वा सम्यग्दर्शनादिरूपा सोक्तेति ।

उ०–सत्यं, क्षायिकभावे एकमेव केवलं तदुत्पादे च मत्यादयो भेदा नश्यन्ति, छद्मस्थानामप्युपयोग समये एकस्मिन्नेकस्यैव ज्ञानस्य दर्शनावरणक्षयोपशमजलब्धिदर्शनाय तूक्तेवेन्द्रियलब्धि', अवधिकेवलदर्शने तु तत्तज्ज्ञानादवश्यं प्राग्भाविनी सहभाविनी च दानाद्या सम्यग्दर्शन पृथक् पृथगनुभवनीयानीति पृथगुक्तानि, लाभार्थोऽत्र लब्धिशब्द इति, ततश्च देशविरतेरिन्द्रियाणां च लब्धिख्यातिः, मिथ्यात्वमप्ययथार्थप्रतीतिरूप-

मिति तदपि सम्यित्तया यथार्थं ग्रहणीयानां मिथ्यात्वं यत इति॥

प्र० ५२२–ननु सिद्धा अनादिका इति तेषां च केवलित्वं नियमात्तत्व केवलज्ञानमिमाममनादित्वं किं नेति?।

उ० सिद्धानां द्रव्यरूपस्यात्पगापरम्परितयिवक्षया स्यात् प्रवाहस्यादित्व, भावे तु प्रवाहाभावात्यतिसिद्धमुत्पाद्यविवक्षात् सादितेति॥

प्र० ५२३ ननु कश्चिदविचार मा अधाणवन् 'महनापि त्यनुक्त्या किमि'त्यामिमियोहियनाण ति गुरुधार इति।

उ०–सत्यं, सम्यगस्यर्थको हि आभिनिबोधिकमाप्त भत एव निर्युक्त्यादिषु 'आभिनिबोधियनाण'मित्युच्यते॥

प्र० ५२४–ननु मतिज्ञानस्य द्रव्यादिषु आवेशेनेति यत् पर तन्मत्वज्ञानस्य विषयेषु कथं न? श्रुतज्ञानस्य च द्रव्यादि पृथगुक्त इति कथमिति?

उ०–मतिज्ञानी हि सम्यग्दर्शनी भवति सम्यग्दर्शनस्य सर्वेण तत्वद्वारेण मतिज्ञानस्य सयद्रव्यादिप्रकाशकत्वात्तदेवोमेति मति भावे श्रुतज्ञानं तु यावदुपयुज्यते तावद् वेत्ति इति मोक्षमुपयुक्त इति, अज्ञानी तु मिथ्यात्वी, न च तस्य धर्माविगता बुद्धिरिति न तदपेक्षा इति॥

प्र० ५२५–ननु परमाणुषु नैश्चयिकव्यवहारिकभेदौ कथमिति? चेत्।

उ०–त्रसरेण्यप्रमाणस्य व्यवहारसिद्धत्वाद्व्यावहारिकता, एकप्रदेशमात्रायगाहा नैश्चयिका, स एव तस्यतोऽनन्ता त्रसरेणुस्वसंख्यप्रदेशावगाह इति॥

प्र० ५२६–ननु चक्षुर्दर्शनादिके मतिज्ञाने पश्यत्ता नेष्यते, श्रुतज्ञाने च तदिरपेक्षे पश्यत्तेष्यते तत्र को हेतुरिति?

उ०–नात्र पश्यत्तासाम्येन दृष्टतेष्टा किन्तु भूतभविष्यत् तत्तत्स्वविधानपरिकलिततया भवोऽन्यव्यादिषु भूतभविष्यत्वान् निर्देशः, श्रुत आसन्नव्याख्यात्मकं 'संसारेऽप उ भवे'त्यादि वचनात्, भावेऽपत्य तत्वतति च भाव इति समुदायामिव मात्येषं स्यादिति अतीताद्यपेक्ष पश्यत्ताऽपि मनःपर्यये॥

प्र० ५२७–ननु आभिनिबोधिकाधिकारे ज्ञानातीस्युक्त तदुक्त तदधिकाराग्रं सर्वत्र पश्यतीनि ज्ञानाधिकारे न युक्तमिति।

उ०–सर्वाण्यपि दर्शनादिमात्राधीनीनीति ज्ञापनार्थं न च दर्शनानां पृथग्विषयनिर्दशनाथन॥

प्र० ५२८—ननु मत्यादीनां विषयेषु द्रव्यग्रहणेनैव क्षेत्रकालयोरपि द्रव्यत्वाज्जायते ग्रहणं, ततः किमर्थं पृथग्ग्रह ? इति ।

उ०—सत्यं, द्रव्येण तज्जातिग्रहात् क्षेत्रकालयोराधारत्वात्पृथग्ग्रह, भवति च तद्विशेषेण बोधविशेष ॥

प्र० ५२९—ननु श्रुतज्ञानविषये 'भावओ णं सुयनाणी उवउत्ते सव्वभावे'त्युक्तं श्रुताज्ञाने तु 'सुयअन्नाणपरिगए भावे आघवेइ तं चेवे'त्युक्त, तत्र को हेतुरिति ?।

उ०—पूर्वग्रथिताक्षरलभ्यार्थेभ्योऽनन्तगुणोऽप्यर्थ, श्रुतज्ञान्यधिगच्छति न चाख्येय स इति जानातीत्युक्तं, श्रुताज्ञानिनां तथाज्ञानाभावात् आख्येयादिज्ञानमेवेतिदर्शनाय तथोक्तिसम्भव इति, श्रुतज्ञाने षट्स्थानपतितत्वं न श्रुताज्ञाने श्रुतकेवल्यभिलाप्यप्रसङ्गानुप्रसङ्गेन तदितरानपि वेत्तीति परोक्षसर्वभावज्ञानं तस्येति तत्संशयच्छेदाय केवल्येव क्षम इत्याहारकक्रृतिः ॥

प्र० ५३०—ननु यथाऽवधिज्ञाने द्रव्यादिषु चतुर्षु जघन्योत्कृष्टविभागैराख्यानं तथा मन पर्यये किं काल एव तद् नत्वन्यत्रेति।

उ०—मनोमात्रस्य द्रव्ये वेदनात् भावे तद्गतभाववेदनाच्च नात्वाभावाच्च विभाग, क्षेत्रे यावच्छन्देन क्षुल्लकप्रतरादेरुक्तत्वात् स गम्यते ॥

प्र० ५३१—ननु एकास्थिके फले एकं बीजमिति तज्जीव एकः स्यात्, पर तत्र गर्भकटाहादयो भिन्नजीवाकाः स्युरिति ?।

उ०—सकटाहगर्भस्य बीजस्यैको इत्येव सम्यक्, कटाहादीनामचित्तीभवने तु बीजे समस्ता जीवप्रदेशाः छिन्नहस्ताद्यवयवमनुष्यजीवप्रदेशावत्, अत सचित्तसम्बद्धो भिन्नोऽतिचारः सचित्ताहारातिचारात्, स्कन्धादिष्वेव पृथग्जीवोक्तिश्चात एव ॥

प्र० ५३२—ननु जैनैरेवोपक्रमादिको व्याख्याप्रकार आम्नायि नापरैस्तत्र किञ्चित्कारणमस्ति यथाकथञ्चिद्वेति ?।

उ०—परैर्यो व्याख्याविधि संहितादिक उक्त स सूत्रानुगमस्य, समग्रानुयोगस्य तूपक्रमादिक, नामादिमयत्वं पदार्थानामभ्युपगतमनेकान्तवादाज्जैनैरित्युपक्रमादिर्व्याख्याप्रकारस्तैरभ्युपगन्तुं शक्यते, परे त्वेकान्तनामादिवादिन इति न तैरुपक्रमादिरभ्युपगतो व्याख्याप्रकार इति सर्वज्ञवचनं शास्त्रमूलमित्यभ्युपगच्छतां जैनानामावश्यक उपक्रमादिर्व्याख्याक्रम, अन्येऽलक्षितेश्वरमानिन इति न तैरुपक्रमादिप्रकार इष्ट इत्यपि सुव-

प्र० ५३८-ननु आजीविकाः श्रावकाणां सामायिकमभ्युपगच्छन्ति न वा? न चेत् क हेतु ते पुरस्कुर्वन्तीति?।

उ०-आजीविका न निजोपासकानां सामायिककृतिमभ्युपगता, हेतुं च तत्र वदन्ति-यत्सामायिके सावद्यत्यागात् भाण्डानां भार्यायाश्च त्याग सम्पद्यते पारितसामायिकानां च पुनस्तत्र श्रावकाणां स्वत्वबुद्धिरिति स्वत्वास्वत्वकृतिः स्यात् सा च नोचितौचित्यमतामिति नैव तै सामायिक स्वीकृत, अनुमत्यंशस्तदीयो न त्यक्त इति तु न तेषां विचारास्पदमिति॥

प्र० ५३९-ननु मृतकपरिष्ठापनस्य क काल? इति।

उ०-दिवा वा रात्रौ वा यदैव काल करोति तदैव मुख्यवृत्त्या परिष्ठाप्यते, सञ्ज्ञातकादिकारणैस्तु विलम्ब्यापि, यदि च विलम्ब्यते तदा छेदनबन्धनादिकार्यं करणीयतामेति॥

प्र० ५४०-ननु 'तुण्डे च से मुहपोतियाइ बज्झइ'त्यावश्यकवचनान्मृतकस्य मुखबन्धन अनुज्ञायते, तत्र किं प्रयोजन? यतो न मृतस्य सयमोऽस्ति परबन्धे च कथ संयमोऽपीति?।

उ०-सत्य, आदौ तावद्विलम्बकारणे जागरणे एव विधि, यथा ऋजुत्वार्थं हस्तपादस्य क्रिया अक्षिनिमीलनं च तथा मुखस्य विवृताच्छादनाय मुखबन्ध, नात्र सयमो हेतुरिति॥

प्र० ५४१-ननु देवनारकवैक्रियापेक्षया तद्व्यापादनाभावात् पञ्चक्रियत्व माभूत्, पर पञ्चेन्द्रियतिरश्चो वायुं चापेक्ष्य तद्वैक्रियापेक्षया पञ्चक्रियत्व किं नेति? चेत्।

उ०-वैक्रियस्थास्ते न व्यापाद्यन्ते इति न वैक्रियापेक्षं पञ्चक्रियत्वमिति॥

प्र० ५४२-ननु योऽसावष्टमशतकषष्ठोद्देशकगत क्रियाविचार स जीववच्छरीरापेक्ष इतरथा वा स्वकीयापेक्षयेतरथा वेति?।

उ०-सरागेतरापेक्षत्वाज्जीवमनुष्या अक्रिया उक्ता, अविरतानां सर्वत्र सर्वक्रियासम्भव इति शरीरिण एवाश्रित्य परितापादिभावात्। शरीरशब्देन शरीरिणोऽवसेयाः, नारकादिपञ्चेन्द्रियाणां सूत्रेऽस्मिन्नधिकारे त्रिज्ञानवत्त्वात्तत्तच्छरीरधारिणमाश्रित्य सङ्कल्पादिकरणसम्भव इति॥

प्र० ५४३-ननु 'समणोवासयस्स ण तहारूवं असजये'-त्यादिसूत्रे यथाच्छन्दादिक श्रमणत्वपतित एव किं गृह्यते? इति।

उ०-अष्टमशतकषष्ठाद्युद्देशकादौ श्रमणानामेवान्ययूथीयै स्वकल्पनया असंयताविरतत्वाद्यापादनात्, नहि कुत्राऽपि गृह-

प्र० ६३८–ननु स्थानाङ्गादिषु गणधरप्रणीतेषु कथमुद्देहिककोटिकगणादीनां निह्नवानां च वक्तव्यता सङ्गता, ? पश्चाज्जातत्वादिति चेत् ।

उ० – सत्य, 'जस्सणुओगो' इत्यादिश्रीनन्दीसूत्रोक्तस्कन्दिलाचार्यवर्णनदर्शनादनुयोगव्यवस्थाकाले तथाविधानि सूत्राणि जातानि, एवमेव निर्युक्त्यनुयोगेऽपि, अत एव तत्रातीतविशिष्टतया वज्रस्वाम्यादीनां वृत्तानि तन्नमस्कारश्च ॥

प्र० ६३९–ननु श्रुतकेवलिनः श्रीमद्भद्रबाहुस्वामिनो निर्युक्तिकारत्वे 'वदामि भद्दबाहु'मित्यादि कथ सङ्गतिमङ्गतीति ? चेत् ।

उ०–सत्यं, सूत्राणां भाष्यव्याख्यानन्तरं निर्युक्तिभाष्यं च मीलित्वैको ग्रन्थो जातो व्याख्यारूप इति तानि भाष्यकृद्वचनानि स्युरिति नासङ्गति, मूलभाष्यभाष्यगाथाभि संवलिताऽपि यथाऽऽवश्यकनिर्युक्तिस्तत्तया प्रसिद्धा, तथाचारप्रकल्पादिनिर्युक्त्यो भाष्यगाथासवलिता भाष्यतया प्रसिद्धा, ग्रन्थकृद्भिरपि तथा तथा ता व्यवहृताश्चेति ॥

प्र० ६४०–'देशसर्वतोऽणुमहती'ति किमिति हिंसादिभ्यो देशतो विरतेरेकविधं ? एकविधादिभावाद् व्रतानामपि एकादिसंयोगेन भावाद् ।

उ०–व्रतत्वसामान्येऽपि अणुना विशेषणं त्रिविधत्रिविधभङ्गेनैव सर्वेषां व्रतानां सहभावेनैव भावाच्च महता विरतेर्विशेषण, निर्विशेषणव्रतशब्देन तु महाव्रतान्येव, अतः श्रावकपरीक्षाया नास्माकं व्रतानि तानि तु साधूनामितिवच्च ॥

प्र० ६४१–नन्वेकेन्द्रियेषूत्पद्यमानां तेजलजघन्यावगाहनाविचारे किमिति स्वाभरणादिघूत्पादः प्रतिपाद्यते ? इति ।

उ०–एकेन्द्रियेष्वप्युत्पद्यमाना देवा नाधोमुखा इति कृत्वा तथोच्यते ॥

प्र० ६४२–ननु केवलीसमुद्घाते समग्रे लोके आत्मप्रदेशापूरणात् संकोचाचैकीभावेन प्राबल्येन च घात. स्यात्तर वेदनादिषु कथमिति ? ।

उ०–तत्राप्यन्तर्मुहूर्तं तप्तदुग्धवत् प्रदेशानां बहिर्निस्सरणं, न च लोकव्यापितेति ॥

प्र० ६४३–ननु विकलपञ्चेन्द्रियाणां कषायसमुद्धतेभ्योऽत्यन्तहीना वेदनासमुद्धता जीवसमुदाये तर्हि कथं विपर्यय ? इति।

उ०—तत्रानुग्रहकारणं चेत्कुर्यादाहारकमविलम्बेन तत एव तैजसकार्मणौदारिकाहारकसयोग सङ्गच्छते, सत्यनुग्रहहेतौ न सम्यग्दृष्टिस्तत्रोपेक्षावानिति आहारकेण सहापि कुर्यात्तदिति॥

प्र० ६५१—नन्वाहारकं यदि संशयव्युच्छेदसूक्ष्मार्थावगाहनप्राणिदयार्थं क्रियते चेत्कथं प्रमत्तत्वं ? जिनर्द्धिदर्शनाय तत्करणे प्रशस्तत्वादिति।

उ०—प्रमत्तत्वं संशयापनोदादेर्न किन्तु तत्समुद्घाते प्रमत्तत्व अत एवारम्भकस्तस्य प्रमत्तो नतु तद्वानिति सिद्धान्तः अन्यथा घटसहस्रादिकरणमप्यप्रमत्ते स्यात् तथाचाराधनार्थमालोचनादिनियमस्य व्याघातात् ॥

प्र० ६५२—ननु श्रुतसामायिकसम्यक्त्वदेशविरतिसर्वविरतिलाभे च कियत्परस्परमन्तरं स्थितेरिति ?॥

उ०—आद्यं ग्रन्थौ ततः संख्यसख्यस्थितिक्षये द्वयं तत. संख्यातसागरक्षये च तूर्यमित्यावश्यकचूर्णौ, अत्र यथाप्रवृत्तनिसर्गोपदेशान्यतरेण श्रुतं तत क्षायिकसम्यक्त्वमध्ये संख्यसागराण्यन्तरं तत सर्वविरत्यधस्तनदेशविरत्यन्त सख्यातानि तत आद्यसर्वविरतेरन्तस्तावन्तीति एवं पल्योपमपृथक्त्वक्षये देशविरतिरित्यादि न विरुध्यते, अनुमात्रवर्जनस्यापि तथात्वात्परं लब्धस्य श्रुतस्य सम्यक्त्वेन शुद्धिभावः, यद् भाष्यं 'सम्यग्दर्शनशुद्धं यो ज्ञान'मिति ॥

प्र० ६५३—ननु 'मुक्खासओ न नत्थत्थे'ति श्रीहरिभद्रसूर्युक्तेः 'घने मलेऽनन्त्यविवर्त्तने'इति श्रीयशोविजयोक्तेश्च मोक्षाभिलापयान्त्यावर्तित्वं यन्निर्णीयते तत्किमार्हतं मोक्षमपेक्ष्य अन्यमताभिमतमपि वेति ?।

उ०—आर्हतमतीयमोक्षस्यावधिरूपत्वात्तदीयमोक्षमेवाश्रित्येति ज्ञेयं, अपुनर्बन्धकादेरप्यार्हतोक्तमोहतत्स्थित्यपेक्षत्वात् चेति (आदिना मार्गाभिमुखतत्पतितौ) ॥

प्र० ६५४—ननु श्रीदशाचूर्ण्यादौ शुक्लपाक्षिकस्यावर्त्तशेषः संसार उक्त योगबिन्द्वादौ चापार्धं इति कथमिति ?।

उ०—तस्वमादौ आवर्त्तशेषे सम्यत्तवलाभप्राक्कालीने उपार्धं स्यादित्यविरोधो द्वयोरपीति ॥

प्र० ६५५—ननु कृष्णपाक्षिकत्वशुक्लपाक्षिकत्वावरमेतरावर्त्तित्वसम्यक्त्वादीनि नियत्यादिभि पञ्चभिर्निष्पाद्यान्येकतमनिष्पाद्यानि वेति?।

उ०-ओमिति ब्रूम यत मेण्ठो हि नमस्कारं कुर्वन्नेव व्यन्तरो जात अकामनिर्जरश्च स ॥

प्र० ६६१-ननु जिनकालीनप्रत्येकबुद्धादिप्रणीतशास्त्रेषु न तथा मङ्गलादिचतुष्टयोपन्यासप्रक्रमो यथाऽजिनकालप्रणीतेषु, तत्र को हेतुरिति ? चेत् ।

उ०-तदा ते उत्पन्नभगवद्गौरवा न तथा पाश्चात्या इति भगवद्गौरवादिहेतवे आवश्यकस्तदुपन्यासस्तदा यथा न तथाधुना नेति,उत्पन्ने च भगवद्गौरवे तदुक्तप्रयोजनसम्बन्धाभिधेयोद्याः स्युरिति ॥

प्र० ६६२-ननु 'देवागमनभोयाने'त्यत्र देवागमनमर्हन्नामोदयात्पर देवेच्छाकृतं चामराद्यपि पूज्यत्वेन देवानां तै कृत, पर नभोयानमाकाशगामित्वरूपं, तच्च तल्लब्ध्युपजीवनात्मकप्रमत्तकृत्यं, ततो वीतराग' कथ तत्कुर्यादिति ?।

उ०-नात्र नभोयानमुत्प्लुत्याकाशे किन्तु सुवर्णकमलेषु गमनावसरे पदन्यासाद् ध्येयम् ॥

प्र० ६६३-ननु क्रियावादिन सम्यग्दृष्ट्य इत्यत्र कथमवधारणमिति ? अशीत्यधिक शतं क्रियावादिनोऽपि मिथ्यादृष्ट्य इति शास्त्रोक्ते ।

उ०-सम्यग्दृष्ट्य' क्रियावादिन एवेत्यवधारणमिति शुक्लपाक्षिकतापि जिनोक्तनवतत्त्वश्रद्धानेऽपि मोक्षस्यैकस्याऽपि रुचिभावात् , तेनाक्रियावाद्युक्तमोक्षरुचावपि न शुक्लपाक्षिकता ॥

प्र० ६६४-ननु सम्यक्त्वधर्माद् भ्रष्टस्यार्धपुद्गलपरावर्त्तान्मोक्षो नियत , तत्किमेतावन्तं निगोदादिस्थावरत्व एवावतिष्ठते नरत्वं वाऽन्तरा लभते ? लभते चेत्कियता कालेनेति ?।

उ०-भ्रंशो द्विधा साध्वाद्यपर्युपासनादिना उत्सूत्रप्ररूपणादिना च, आद्ये,त्वन्तर्मुहूर्तेनापि नरत्वादि, अन्त्ये तु नरत्वमर्धतृतीयावलिकापुद्गलावर्त्तें पुनर्लभ्यमित्यनन्तदुर्लभबोधित्वाद् 'खेनावोगधादुभयमपि ॥

प्र०६६५-कीदृशं मोक्षमिच्छन् शुक्लपाक्षिकश्चरमावर्त्तीति च निश्चीयते ? इति ।

उ०-भवाबाधारहितनित्यकालीनसम्पूर्णज्ञानादिस्वरूपजीवदृशास्वरूपमिति, अन्यथा तु मोक्षमाणा अपि न तथेति, एवं चाभिग्रहिकमिथ्यादृशोऽपि स्युरभव्या इति ॥

प्र० ६६६-नन्वतादृशमपि मोक्षमिच्छन् किं न शुक्लपाक्षिक इति ? आममिति चेद् विपर्याद्यनुष्ठानसांमत्यं कथमिति ?।

उ०–आत्मादेरस्तित्वे यथाऽशीतिशतं क्रियावादिनां भेदा' तथैव तन्नास्तित्वे चतुरशीतिरक्रियावादिनामिति पुण्यपापयोर्न पाखण्डिनामपि विप्रतिपत्तिरिति तत्प्रतीति सम्यक्त्वहेतुतयोक्ता, आर्यागमानुसारिणी नवतत्त्वी, अन्तर्भावपक्षे जीवाजीवयोरेव भावात्तत्त्वद्वययेव स्यात्, तत्त्वसप्तक पदार्थनवकमिति तु नग्ना एव ॥

प्र० ६७२–ननु कथमिमा भरताद्या कर्मभूमय इति ? निर्वाण कृष्यादि प्रकृष्टशुभाशुभं वा कर्म तस्य भूमय इति चेत् दुष्षमसुषमां विरहय्य नान्यदा प्रायस्तदिति तदा भरतैरावता अकर्मभूमित्वमायान्तीति ।

उ०–यत्र जाता निर्वाणादिकर्मान्वातिष्ठन्ननुतिष्ठन्त्यनुष्ठास्यन्ति ता कर्मभूमय इति तत्त्वार्थभाष्यमनुस्मर ॥

[ तपोऽनवस्थाप्यस्तप पारांचिकश्चतुर्दशपूर्वधरे श्रीभद्रबाहुस्वामिनि व्यवच्छिन्नौ, शेषास्तु लिङ्गक्षेत्रकालानस्थाप्यपारांचिका यावत्तीर्थे यतिजीतकल्पे १०२ गाथा २९ पृष्ठे 'तवअणवट्ठिओ तवपाराञ्चिओ य भद्दबाहुसामिमि चरमचउद्दसपुव्वधरे दोवि वुच्छिन्ना लिंगखित्तकालाणवट्ठियपारांचिया ताव अणुसज्जति जाव तित्थं' ॥ ]

प्र० ६७३–ननु अङ्गोपाङ्गप्रकीर्णकादिषु श्राद्धानां प्रतिमाव्यतिरेकेण चतुर्दश्यष्टम्युद्दिष्टापौर्णमास्य पौषधेनाराध्या इति श्रूयते कथ्यते च, तर्हि ज्ञानपञ्चमीमौनैकादश्यादीनामाराधनं पौषधादिनाऽऽगमानुसारिणांकथं सङ्गच्छते ? इति ।

उ०–सत्यं, प्रथम तावद्विहरतिपदर्शनेन मासिक्य एतास्तिथय आराध्या निर्दिष्टाः, अन्यथा तत्कारिणः श्रावका नवेति विचारणीय श्रावकत्वे ते चातुर्मासिकसांवत्सरिकाणां नियमेनाराधका' भगवच्छ्रीमहावीरशासनानुगश्रावकत्वात्तेषां, परं प्रतिमासं नियमे तदभावात्ता नोक्ता, तन्नैतासामागामानुसारिता, किञ्च–श्रीमन्महानिशीथे ज्ञानपञ्चम्यामभक्तार्थस्याकरणेऽनगाराणामादिष्ट प्रायश्चित्तमित्याराध्यैव सा, अन्यच्च देशतश्चारित्रस्य तत्राधिकारात्तदाराधनाप्रधाना अष्टम्यादय एवोक्ता नैतावतान्यासामागमविरुद्धत्व दर्शनज्ञानाराधनाप्रधानानां तिथीनामनधिकारादेवानुक्ते, ताश्च द्वितीयापञ्चम्याद्या, सम्बोधप्रकरणोक्ता । किञ्च–श्रीसिद्धशिलातलादिगतान्यचित्तान्यप्यनगारशरीराणि भावावश्यककारणत्वेनावश्यकाधिकाराद् द्रव्यावश्यकतयाऽऽदराहाण्युक्तानि तथा शिवार्थिनामनुमतां-

देवत्वमिति, एव द्रव्यतपोऽपि फलदमिति ध्वनितं, अन्यथाऽकामनिर्जरावन्तस्तु एकेन्द्रियाद्योऽपि न ते भव्यदेवा इति ॥

प्र० ६७७ – ननु मुक्त्यभिलाषिणां यत्किञ्चिदप्यनुष्ठान सकामनिर्जराहेतुरिति वदति कश्चित्तत्किं सत्यमाहोश्विदन्यथेति?

उ०-भगवज्जिनेश्वरोक्तं मोक्षमनुसन्धाय तदुक्तं तन्मार्गं लेशेनाऽपि सातिचारमितरं चाचरन् सकामनिर्जराक एव, अन्यथा तु न कथञ्चित्, अपूर्वकरणादे प्रागकामनिर्जराया एवाभ्युपगमात् मुक्त्यर्थमन्ये भृगुपतनाद्यपि कुर्वन्ति तेषां शास्त्रकृद्भिरनन्तरफल देवत्वमुक्त परं पारम्पर्येण सक्लेशजनकत्वेन शस्त्रग्रहणादीनामनन्तभवभ्रमणहेतुत्वं, 'परिति भवसागरमणतं चे'तिकथनेनानन्तभवहेतुतोक्ता, तथा च तादृशां कथ सकामनिर्जरालेशोऽपि, किञ्च-मिथ्यात्व नानन्तानुबन्धिनो विरहय्य, अनन्तजन्मानुबन्धकाश्च ते इति कथ तादृशा सकामनिर्जरावन्त ? इति ॥

प्र० ६७८–ननु कश्चित्कथयति यत्-व्यन्तरान्विहायान्ये सर्वेऽपि देवा पूर्वभवे सकामनिर्जराका, यतोऽकामानां व्यन्तरेष्वेवोत्पादात्तत्कथमिति ?।

उ०-तन्मतेन किं नवमग्रैवेयकान्तगामिनोऽभव्या अच्युतान्तगामिनश्च निह्नवा इति तद्वाच्यो ? ये व्यन्तरादूर्ध्वं गन्तार ते सर्वे सकामनिर्जराका सम्पद्येरन्, न च तद्युक्तमिति ॥

प्र० ६७९–नन्ववधिज्ञानिमनुष्याधिकारे 'आहोही परमाहोही' उच्यते तत्कथमिति ?।

उ०-देवनारकाणामवधिर्न केवलं क्षयोपशमरूपयथोक्तनिमित्तः किन्तु तद्भवसहचरिततदावरणक्षयोपशमनिमित्तत्वात् तदुभयनिमित्त, भवो मुख्यं च निमित्तं तत्र, परं मनुष्यभवो नावधेर्नियतकारणं किन्तु तदावरणक्षयोपशमरूपयथोक्तनिमित्त इति बोधनाय यथावधि परमयथावधिरितिशब्दौ, अधो विस्तृतज्ञानं सामान्यावधिमतां स्यादेव, तथा व्याख्यानमपि न विरोधावहम्॥

प्र० ६८०–ननु अभव्यानामाभिग्रहिक मिथ्यात्वं भवेन्नवेति।

उ०-लोकायतिकानामप्याभिग्रहिकं तदिति तस्याभव्ये सत्तायां का हानि.?, तस्य तु कस्यचित्तत्त्वाएकश्रद्धानस्योक्ते, अन्यथा पूजादेवत्वनरेन्द्रत्वाद्यर्थ तपसोऽस्वीकारप्रसङ्गात् । एवं कुदेवकुगुरुकुधर्माभिग्रहरूपमपि तत्स्यादेव, परं मुक्तिदायकतया कुदेवादिविषय तु तन्न स्यादेव, मुक्तिश्रद्धानशून्यत्वात्तेषाम् ।

प्र० ६८५–ननु 'तब्भावे सेसाणि ये'त्यनेन मतिश्रुतयो सद्भाव एवावध्यादीनीत्यावेदित', तथा चाश्रुत्वाकेवलिनां मरुदेवाप्रभृतीनां चाप्राप्तश्रुतानां कथ केवलसद्भाव ? इति ।

उ०–साक्षादागमश्रुताभावेऽपि तदभिधेयार्थज्ञान त्वावश्यक, सवरादीन् शुक्लध्यानं च विना तदुत्पादस्यैवासम्भवात्, अत एव पूर्वप्रतिपन्ननये नैकज्ञाना केवलिन, नयान्तरेण केवलमतिविकल्पोऽपि परम्परागमाभावमपेक्ष्य, तद्द्वय एव शेषभावो, द्वयमेव स्वामिकालादिभिस्तुल्यमित्यादौ तद्द्वय नान्यत् केनाप्येतावत्साधर्म्यवदिति साहश्य तद्भावभावश्चेति हेतुद्वय यत्तेनेत्येकोद्देशनिर्देशात् ॥

प्र० ६८६–ननु 'जत्थ मइनाण'मित्यादिना मतिश्रुतयोः साहचर्यं नियम्यते मतिज्ञानं चान्तराले गर्भाद्यवस्थायामपि भवति न च तत्र शब्दज्ञानमपीति ।

उ०–सांकेतिकाभिधानाभावेऽपि स्पर्शादिप्रतीत्युत्थ स्यादेव, अनुभवमात्रस्योल्लेखानुगतत्वादिति ॥

प्र० ६८७–ननु 'जत्थ मई'त्यादिना परस्पराविनाभावनियमात् मतिश्रुतयोः समस्वामिकत्वं न्याय्यमवधेस्तु कथमिति ?॥

उ०–योऽवधिमान् स नियमादाद्यद्वयवानेवेति, त्र्यज्ञानानां सम्यक्त्वावाप्तौ वेति, कालेऽपि आद्ययो स्थितिकालेन यावत्सम्यक्त्वं तयोरवश्यभावात्, अवधेस्तूत्कृष्टस्थित्या, नह्यवधिमतां सुदृशामपि मतिश्रुतवत्सदाऽवस्थाय्यवधिरिति, आद्ययोरात्मसहान्यकारणता ओघेन सर्वद्रव्यादिविषयता च पारमार्थिकपरोक्षता च ॥

प्र० ६८८–ननु कथ सम्यग्दर्शनज्ञानचारित्राणां ज्ञानक्रियोभयस्य ज्ञानसंयमतपसां वा मोक्षमार्गत्व, यतः कृत्स्नकर्मक्षयो मोक्ष स च बन्धहेत्वभावनिर्जराभ्यां, ते च संवरनिर्जरात्मकत्वाच्चारित्ररूपे एवेति ।

उ०–सत्यं, परं न सर्वयोगनिरोधरूपामयोगितां । (विना) कस्यापि, न च सा कर्मक्षपणश्रेणिरचनामन्तरेण, न च सा केवलोपयोगमन्तरा, न च स क्षपकश्रेणिमृते, न च सा क्षायिकसम्यग्दर्शनं विनेति त्रीणि च तानि दर्शनमोहनीयादिबन्धाभावनिर्जराकृतान्येव, तत्र च तानि ते च तथावस्थान्येव तत्कारणतायां तेषां तयोस्तेषां च तथात्वात्तदा विरोधो न ॥

प्र० ६८९–ननु सम्यक्चारित्रं सम्यग्दर्शनज्ञानयो सद्भाव एवेति तदेवैकं मोक्षाङ्गतया वक्तुमुचितमिति ॥

प्र० ६९४-ननु तमस्कायः अरुणोदधिप्रभव अरुणोदक इति तस्याभिधानमप्यस्ति अनुपादानत्वाच्चाप्रमयतया निर्णेतु सुशक, पर कृष्णराज्य किम्मय्य किंप्रभवाश्चेति ?।

उ०-ता हि पृथिवीमय्य तमस्कायप्रभवाश्चेति भगवती-षष्ठशतकपञ्चमोद्देशात् हारिभद्रीयतत्त्वार्थवृत्तितश्च निश्चीयते॥

प्र० ६९५ – ननु सारस्वतादीनामर्चिरादिविमानानि किमावलिकाप्रविष्टानि यद्वा पुष्पावकीर्णानीति ?।

उ० – रिष्टविमान त्विन्द्रकतया शेषाण्यर्चिरादीनि तु कृष्णराज्योर्द्वयोर्द्वयोरन्तराले समश्रेण्या रिष्टस्यावस्थानाभावात् पुष्पावकीर्णानीति ॥

प्र०६९६-ननु'सीलाइं वयाइ गुणाइं वेरमणाइं पच्चक्खाणाइं पोसहोववासाइं'ति श्रावकवर्णने आख्यायते, तत्र कस्कोऽर्थः ? तानि क्रमभावीनीतरथा वेति ?।

उ०-तत्र शीलशब्देन विनयशुश्रूषाश्रवणश्रुतानि गृह्यन्ते, तदनन्तरं व्रतानीति देशाहिंसादीन्यणुव्रतानि, 'गुणाइं'ति दिक्-परिमाणादीनि गुणव्रतानि, विरमणेन तु व्रतोच्चारे मुत्कलीकृतानामव्रतानां त्याग , यथा सर्वथामैथुनस्य,नमस्कारसहितादीनि प्रत्याख्यानानि, गुणव्रतेषु गृहीतातिरिक्तपौषधोपवासा इति, न च नियमात् क्रमभाव जातिस्मृत्यादेर्व्रतादीनां भावात् द्वादशानामपि व्रतानां वैकल्पिकाङ्गीकाराच्च ॥

प्र० ६९७ ननु 'सिज्झति जनिया किल इह सववहाररासिमज्झाओ। इंति अणाइवणस्सइमज्झाओ ततिया तमि' ॥१॥ इतिविशेषणवतीगाथायां योऽनादिवनस्पतिसमूह उक्त, स क इति ? सूक्ष्मबादरनिगोदरूपश्चेत् प्रत्येक कथ न ग्राह्य ? गृह्यते चेत् किं प्रत्येकवनस्पतिरव्यवहारिक' वनस्पतिरपि सन् वर्ज्यते बादरनिगोदानामपि स्थूलत्वात्कथं न वर्जनमिति ?

उ० – अनादिवनस्पतिशब्देन सूक्ष्मबादरभेदभिन्ना एव निगोदा ग्राह्या , प्रत्येकवनस्पतयस्तु क्रमापेक्षया पृथ्व्यप्तेजोवायूनामनन्तर स्थावरकायः चैतन्य च पृथ्व्यादिक्रमेण वृद्धिमदिति नानादौ निवेशयितु योग्य , बादरनिगोदाश्च चेन्निवेश्यन्ते न अनादिवनस्पतौ तर्हि निगोदानन्ततमभागत्वं न स्यात् सिद्धानां, यद्वा सर्वेषामसुमतां मूलतोऽसांव्यवहारिकता न स्यादिति प्रक्षेप्या एव बादरनिगोदा अव्यवहारराशौ, श्रीललितविस्तरापञ्जिकाकायस्थितिप्रकरणयोरपि निगोदानामसांव्यवहारिकतैवोक्ता प्रज्ञापनावृत्तौ च पृथ्वीकायादिन एव व्यवहारिकतोक्ता, यच्च

यावत् त्रसत्वादिप्राप्तेश्च विचित्रता तथाभव्यत्वजनितैवेति सुष्ठूक्त 'अत्थि अणन्ते'त्यादि, ननु त्रसादिभावस्य प्राप्त्यप्राप्तिभ्यां तथाभव्यत्वस्य सिद्धौ किमर्थमनन्ता इति, तथाभव्यत्वस्यात्यन्तवैचित्र्यार्थं, यतोऽसंव्यवहारराशेर्निर्गता अपि जीवा अनन्तास्तादृशा ये पृथ्व्यादिष्वागत्य व्यवहारिकतां गता अपि पुन पुन स्थावरेष्वेव गतागतं कुर्वन्ति, न च दुर्लभतमत्वात् त्रसादिभावमाप्नुवन्तीति, तत्रापि तथाभव्यत्वमेव हेतु., न च वाच्यं व्यवहारराशिमागतानां बहुनापि कालेन तथाभव्यत्वपरिपाकात् भाव्येव मोक्ष, एव चाभ्युपगतेऽपि तथाभव्यत्वे अनन्ताना त्रसत्वाप्राप्त्याऽभ्युपगते च व्यवहारराशेरानन्त्ये कालान्तरे सर्वभव्यानां मुक्तिर्भव्योच्छेदश्च तदवस्थ एवेति, यत निगोदवासमप्राप्तव्यवहारभावा सन्तोऽनन्तानन्ता अनुभवन्ति, मुक्ताश्च सर्वत्राऽपि काले एकनिगोदानन्तभागरूपानन्तसङ्ख्याका एवेति न भव्योच्छेदो न च सर्वेषां भव्यानां मुक्तिप्रसङ्ग, अत्रेदमवसेयं–प्राप्तत्रसादिभावाश्च सेषु असङ्ख्या एव तथाभूता अपि पुन' स्थावरत्वमनन्ताः अप्राप्तत्रसादिभावा व्यवहारराशिगता अनन्ताः व्यवहारराशिमप्राप्ता निगोदजीवास्त्वनन्तानन्ता, एवमेव चाव्यवहारराशिसिद्धिरपीति सर्वमागमवचनमवदातमिति ॥

प्र० ७००–ननु अव्यवहारराशावनाद्यनन्तकालस्थितिके साधिते महानागमविरोध, यतोऽनाद्यनन्तकालिकमभव्यानां मिथ्यात्वाज्ञानादि दर्शित परं जीवानां सूक्ष्मबादरनिगोदादिगतानामपि न कायस्थितिरनाद्यनन्तकालिकी निर्दिष्टेति ।

उ०–सत्य,सिद्धान्ते कायस्थितिस्तेषामेव निरूपिता येऽन्यत आगत्य तिष्ठन्ति यावन्त काल, तत्र या सूक्ष्मबादरोभयेषामपि निगोदानामपि कायस्थिति साप्यन्यत आगत्य तत्र स्थितानां नत्वनादितस्तत्र स्थितानां स्थास्यमानानां परावर्ताभावादाद्यन्ताभावात् प्रारम्भान्तयोरभावात् तत्र तदुक्तेरनुपयोगादिति ॥

प्र० ७०१–ननु श्रीकल्पसूत्रे 'नवसया वइक्कंता दसमस्स य सयस्स अयं असीइमे संवच्छरे काले गच्छइ, वायणंतरे पुण अय तेणउए त्ति संवच्छरे दीसई'त्युक्तं, तत्र पूर्वोऽवधिर्भगवतो महावीरस्य निर्वाणककाले दिनमिति कार्त्तिकामावास्या लभ्यत एव, परं परस्मिन्नवधौ को वासरो मासपक्षश्च नियततयाऽवसेय ? इति ।

विरोधस्तेषां कार्तिक्यां चतुर्मासीप्रतिक्रमण क्रियमाणमवश्यं चतुर्दश्या किं स्थापितं? चेदेकदिवसस्याधिक्यप्रसङ्गेन चतुर्मास्यवश्यक्यते कथं तर्हि मासस्याधिक्ये गण्यते तदा मासो नावश्यक्यते तैरिति ॥

प्र० ७०४–ननु बालतपस्वी सकामनिर्जराक इतरो वा? इतरश्चेत्कथं भेदेन निर्दिष्ट, सकामनिर्जराकश्चेत् स कथं निन्दनीय? इति चेत्।

उ०–स हि द्विधा अकाममरण इतरश्च, आद्यस्त्वनन्तसंसार· इतरोऽपि महासावद्यानुष्ठायी किन्तु मुक्तीच्छा तद्वता शस्येति पृथग् निर्देश द्वयेऽप्यकामनिर्जराका एव, पार्थक्यात्स्वरूपभेदश्चेत् सरागसंयमाद्या भूतव्रत्यनुकम्पादिरहिता स्यु, पञ्चचरित्रादिषु देवायुर्हेतुषु बालतपसोऽग्रहोऽपि पृथक्तयेति यदि चाकामनिर्जरात पृथग् निर्देशादस्य सकामैवेत्याग्रहस्तर्हि संयतादीनामन्यैव काचिद्वाच्या इच्छया विनाऽकामा दुःखसहने श्रुत तु बालतप इति इच्छानिच्छाकृतो ·˙ भेद, न तु सकामाकामनिर्जराकृत, किञ्च–मिथ्यादृशां तापसपरिव्राजकादीनां देवगतिमर्यादाभेदात् बालतपोग्रह ॥

प्र० ७०५–ननु वास्तुप्रतिष्ठाज्योतिष्कादिषु लौकिकव्यवहारेण प्रवर्त्तन जायते, तत्किमाधुनिक प्रत्नं वेति?।

उ०–ज्योतिष्कं तु लौकिकं सिद्धान्तपुस्तकारोहकालादपि प्रागालम्बितं अवमरात्रातिरात्रमासादिनिरूपण तत्रापि तदनुसार्येव, वास्तुविद्याऽपि जिनभवनकारणादौ श्रीहरिभद्रसूरिभिर्भूमिशुद्ध्यधिकारे आदृता, पञ्चाशकषोडशादिषु प्रतिष्ठाविधिरपि 'लोगागमनीइए'त्ति ब्रुवद्भि श्रीहरिभद्रसूरिभिर्लोकाश्रिता सम्मतेति, शकुनाद्यपि तदनुसारि, तत एव च दध्यक्षतादीनां मङ्गलताभिमतेति ॥

प्र० ७०६ – ननु पर्वतिथे क्षये पूर्वस्या अपर्वतिथेः पर्वतिथित्व वृद्धौ च पूर्वस्यास्तस्या· पूर्वापर्वतिथित्वं क्रियते पर्वानन्तरपर्वतिथेस्तु तथात्वे पूर्वतरस्यास्तत्र कि मानमिति?।

उ०–पूर्व तावत् 'क्षये पूर्वा तिथिः कार्या वृद्धौ कार्या तथोत्तरे'ति श्राद्धविधिप्रतिपादित श्रीउमास्वातिप्रघोषः, किञ्च–तिथयश्चन्द्रचारविशेषणोत्पन्ना अपि सूर्योदयस्पर्शिन्य एव व्यवहारमवतीर्णाः, अत एवावमरात्रांशानामवमरात्रस्य च सम्भव, तथा यदि सूर्योदयसंयुतास्तदाऽविगानं तत्तन्नाम्ना व्यवहारपदं

प्र० ७०९-ननु किमिति दर्शनमोहात्प्रागेवानन्ता भेद्या ? किमिति सम्यक्त्वाच्च्युतौ प्रागेव दर्शनमोहादुदीयन्ते ? किमिति च दर्शनमोहक्षयाभावे तत्क्षयेऽपि पुनर्भावीति ? ।

उ०-अनन्ता हि तत्त्वानां प्रीतेर्घातका अत एव तदुदय सम्यक्त्वस्य नाशक दर्शनमोहस्तु तेषां प्रतीतेर्नाशकः, न भवत्येव छिद्रस्यैवाप्रीतिमतो यथार्था प्रतीति, तत प्रागेव ते भेद्या, अप्रीत्युत्पादे च नश्यत्येव यथार्थाऽपि प्रतीतिरिति प्रागेवोदयस्तेषां स्यादेव च प्रीतिनाशे सत्यपि प्रतीतिर्निर्मूलनाश नष्टेति युक्तमेवाखिलमिति ॥

प्र० ७१०-ननु अभावादेवानन्तानां सम्यक्त्व भावे च तेषां नाश सम्यक्त्वस्येत्यस्य निर्विवादत्वे किमिति ते चारित्रमोहरूपा कथ्यन्ते ?, यद्भावे यन्न भवति अभाव एव च भवति तत्तस्य प्रतिबन्धक, यथा ज्ञानावरणीयं ज्ञानस्यैव, एव चानन्तानां दर्शनमोहता युक्तेति ।

उ०-सम्यग्दर्शन हि यथार्थतत्त्वप्रतीतिरूपं, प्रतीतिश्च सा दर्शनमोहेनैव घात्यते, कषाया हि रागद्वेषस्वरूपत्वात् प्रीत्यप्रीत्यात्मका अनन्तानुबन्धिनश्च तत्त्वातत्त्वयोरप्रीतिप्रीतिस्वरूपा इति कषायमोहनीयता, केवलं तत्त्वत्रय्येव तेषां विषय इति,

प्र० ७११-ननु सम्यक्त्वस्य प्रधानतम लक्षण प्रशम इति पर स विषयतृट्क्रोधकण्डूत्यो कि वाऽपराधिविषयकक्रोधस्येति? अनन्तानुबन्धिनां स इत्यत्र न कोऽपि प्रश्न इति ।

उ०-सत्यं, तत्त्वत्रय्या न कदाचित्कथंचित्क्वचिदप्यप्रीति तथैव च विपरीतायां तस्यां प्रीतिरिति प्रधान सम्यक्त्वलक्षण परं पण्डितपरिषत्कां योऽभ्युपेयात् सोऽवश्य पिपासाकण्डुत्यो प्रशमन यश्च कारकसम्यक्त्वान् सोपि अपराधिन्यपि अक्रोधन ततश्च देशना क्रमावाप्तसम्यक्त्वोऽवश्यममांसाशी यथात्रापि यथायथ प्रशमो योज्य इति ॥

प्र०७१२-ननु मिथ्यादृशां या निर्जरा सा सकामा अकामा वा ?, केचिद्वदन्ति यदुत-तेषामकामैव, यतस्ते हि यथाभद्रका अप्यप्राप्तापूर्वानिवृत्तिकरणा सन्त केचिदेव चरमयथाप्रवृत्तिकरणगता अनाभोगवत्येव तेषामपि निर्जरेत्यकामनिर्जराका, न च यथास्थितात्मतद्गुणतत्प्रतिबन्धकस्वभाववत्कर्मतत्क्षयजातमुक्तितत्त्वश्रद्धावन्तस्तथात्वे सम्यग्दृक्त्वप्रसङ्गात् तदभावे च कर्मक्षयबुद्धिसद्भावोऽपि अप्रेक्षापूर्वक एव, अत एव चाताप-

इति तु नैव नियन्तुं शक्य, मोक्षातिरिक्ततत्त्वानां श्रद्धानसम्भवस्तेषामपि यत, बालतपस्विवदकामनिर्जरका अपि, तादात्विकभोगाभिलाष एव विशेषक' मुक्तिरपि वैकुण्ठविशेष, न चात्मगुणप्रतिबन्धकतया कर्माभ्युपगमस्तस्य, किञ्च—यत्र पञ्चाग्निसमरादित्याख्यानकादिषु दैवाथवेषु बालतप एव गण्यते तत्र का दर्शतस्य ॥

प्र० ७१३—ननु ऋजुमत्यधिकारे 'खित्तओ जहण्णेण'मिति यत् क्वचिद् दृश्यते तत्सङ्गत स्यान्नवेति चेत् ॥

उ०—उच्यते मन पर्यायज्ञान तावद् ऋद्धिप्राप्तस्य स्यात् अवधिज्ञानं च छाद्मस्थिकज्ञानेषु ऋद्धिरूपमन केश्चित्सावधिकस्यैव मन पर्यायज्ञानमभ्युपगम्यते दर्शनमपि तदपेक्षया प्रतिपाती चावधिरिति मतिश्रुतमन पर्याय इति ज्ञानत्रयविकल्पो न विरुध्येत, यथा भाष्ये केवलस्य मतिज्ञानस्याभ्युपगमे पश्चात्कृतज्ञानविकल्पेषु तदनुक्ति, आश्रवनिरोधाद्याथ्यं व्यापारमाश्रित्य सर्वस्यापि केवलिन प्राक्केवलात् श्रुतवत्त्वात् तथा सावधिमन पर्यायापेक्षया 'जहन्नेण'मित्यादि सङ्गत, पर्याप्तसञ्ज्ञिमनोद्रव्यालम्बनत्वान्नातिप्रसङ्गो, द्रव्यादिषु पश्यत्तारूप प्रेक्षणमप्येवमतिशयेन सङ्गतं स्यादिति ॥

प्र० ७१४—ननु 'जिणपवयणवुड्ढिकरं, पभावगं नाणदंसणगुणाण। भक्खतो जिणदव्वं, अणंतससारिओ होइ'त्यत्र जिनद्रव्ये शासनप्रभावकत्वादिकथनात् किं तत् प्रभावनादिपूपयोक्तु योग्यमिति ? चेत् ॥

उ०—न, प्रवचनप्रभावनादिचैत्यमहिमप्रभृतिभिरिति स्पष्टं दर्शनशुद्धौ किन्त्वेतद्विनाशे तद्विनाशोपालम्भोऽपि च, वसुदेवहिण्ड्यां प्रतिमुखे अन्धकवृष्ण्यधिकारे 'जिणबिंबपूयादंसणाणंदियहिययाण'मित्यादि ॥

प्र० ७१५—ननु व्यवहारराशिमागतानां वनस्पतीनां तिरश्चां च आवलिकाऽसंख्येयभागमानपरावर्त्ताः स्थितिसक्ता तत् किमेतावन्तमेव काल व्यवहारराशित्वं जीवस्यैकस्येति ? चेत्।

उ०—नैष एकान्त, नरदेवभवान्तरिततया पुन' पुनभ्रमणेनानन्तानामपि तेषा भावात्, नरत्वे लब्धाराधनस्य तु तावता मोक्ष एवेति ॥

प्र० ७१६ – ननु अनादिवनस्पतित्वमत्यन्तवनस्पतित्वं च सूक्ष्माणां निगोदानां वा बादराणां वोभयेषां वेति ? चेत्।

उ०—सूक्ष्माणामिति गृहाण, उभयेऽप्यसंव्यवहारिका इति

प्र० ७२१–ननु गणधरकेशिकुमाराद्या श्रमणा भगवन्तो गच्छवासिनो गच्छनिर्गता वा ?, आद्ये प्रमत्तास्ते श्रीनन्दीप्रज्ञापनादिषु मन पर्यवाधिकारे तेषां तथात्वाभिधानात्, तत्त्वे च कथ चतुर्ज्ञानिन ? अप्रमत्तानामेव मन पर्ययभावात्, द्वितीयस्तु नैव, जिनकल्पिकादित्वाभावादिति चेत्।

उ०– श्रृणु, तद्वचो जिनकल्पिकादीनां प्रमत्तत्वाभावतात्पर्यक न तु सर्वदा गच्छवासिना प्रमत्तत्तानिर्णायकं, ततस्तेषामप्यप्रमत्ततसम्भवान्न मन पर्यायज्ञानस्यानुपपत्ति, अप्रमत्तस्य तदुत्पद्यते स्थितिस्तूभयापि, प्रमत्ताप्रमत्तकालस्यैवमेव निर्वाह॥

प्र० ७२२–नन्वाहारकशरीरिण प्रमत्तत्वमप्रमत्तत्व वा ?

उ०–करणकाले प्रमत्तत्व स्थितौ तूभयमपि, सिद्धान्तिकास्तु लब्ध्युपजीवनौदारिकग्रहणव्याकुलत्वादिना प्रमत्तत्वमाहु, प्राणिदयाद्यपेक्षमप्रमत्तत्वमृद्धिदर्शनाद्यपेक्षमितरच्चेत् स्यान्नासङ्गतम्॥

प्र० ७२३–ननु सयतानां प्रमत्ताप्रमत्तत्वेन विभागस्तथा सम्यग्दृशा देशविरताना च किं न ? किं ते निद्रादिप्रमादरहिता न स्युरिति? चेत्।

उ०–सत्यं, तेषां निद्रादिप्रमादरहितत्वसम्भवेऽप्यविरतिरूपस्य महाप्रमादस्य सद्भावान्न तथाविभाग॥

प्र० ७२४–ननु यथा मन पर्यायज्ञानमप्रमत्तस्योत्पद्यते तथा सम्यक्त्वमतिश्रुतावध्यादीन्यप्यप्रमत्तस्यैवोत्पद्यन्ते, प्रशस्तलेश्यावतामेव तल्लाभनियमात्, तत्र किं मन पर्ययलब्धिरेव विशिष्यतेऽप्रमत्तत्वेनेति ?।

उ०–सत्यं, सम्यक्त्वादीनि प्रशस्तलेश्याकानां प्रमादरहितानामेव भवन्ति, परमविरति महाप्रमादरूपा, तस्यां च सत्यामपि सम्यक्त्वादीनां भावात् निश्चयते तदुत्पत्तिरप्रमत्तत्वेन, तथा चावतरहितानामेव प्रमत्तेतरविभाग, नहि कृष्णे वाससि मलिनेतरविभाग इति॥

प्र० ७२५–ननु मारणान्तिकसमुद्घाते कथं नारकाणां जघन्येन योजनसहस्रमायाम ?, नरकेन्द्रकपातालकलशकुड्ययोः सहस्र २ मानत्वादिति चेद्।

उ०–अवगाह्य सहस्र समुद्घात इति न विरोधः॥

प्र० ७२६–नन्वाभरणपद्मरागाणां महत्त्वात्कथमंगुलासख्यभागो भवनेशादीनां मारणान्तिकसमुद्घाते आयाम इति चेत्।

उ०-आद्या. स्वरूपत फलतश्च चिन्तनीया, अन्याश्च गुणस्थानव्यवहारादिना, तेनान्त्यासु अण्णयरस्स वीति, तथा च उत्तरगुणव्यवच्छेद अधस्त्यगुणनियमो ध्वन्यते ॥

प्र० ७३२-ननु कर्मणामष्टकमपि वेद्यत एव तर्हि किमिति तृतीयस्या एव कर्मप्रकृते रूढ वेदनीयमिति नामेति ? चेत् ।

उ०-सत्यं, यथा वेद्यमान सुखं दु ख वा जीवस्याकर्षकं न तथा ज्ञानावरणीयादीति गृहाण, सुगतिदुर्गतित्वमपि तदपेक्षयैव, अत एव पञ्चेन्द्रियवधादिदुष्कृत्यफल नरकायुर्बन्धादि निगद्यते, ज्ञानावरणीयादिबन्धकेषु नियमाद् वेदनीयबन्ध बहुपुद्गलवेदनीय सततबन्धं भूयोभूयश्चैव भवस्यापि दु खरूपफलानुबन्धितोक्ति कायादिपुद्गलपर्यवसानमत्र विरमणवैराग्ये, 'सव्वदुक्खाणमत करेंती'ति, 'परिणिव्वुडे'त्यादिवचोऽत्र, 'छिन्नजाइ जरे'त्यादि चात' ॥

प्र० ७३३-ननु कथमावरणमोहनीयान्तराया इति पृथगिति ? ।

उ०-ज्ञानदर्शनसम्यक्त्ववीतरागत्ववीर्याणि तावन्नाभिनिर्वर्त्तनीयानि, किन्त्वाविर्भावनीयानि, तथा चान्येषा ज्ञानाद्यधिकरणमात्मा कुण्डवदरवत्, जैनानां ज्ञानादिमय स सुवर्णकपादिवत्, किञ्च-सर्वेषामात्मनामशतोऽप्यनुभवनीयान्येतानि, नहि कोऽप्यात्मा ज्ञानादिहीन, आवरणापगमे सच्चक्षुष्कस्य रूपोपलम्भवत् सोऽयमस्याप्यावरणापगमे ज्ञानदर्शनोपलम्भ, इत्यावरणातासिद्धमपि मुग्धत्वेन नाभिमन्यते गृह्यते यथा तथा सम्यक्त्वचारित्रादि इति तदाश्रितं मोहनीयं, इष्ट सिद्ध लातुमिष्टमपि न लभ्यतेऽत्वरितमित्यन्तरायत्व चावसेयमिति ॥

प्र० ७३४-ननु 'सव्वदुक्खप्पहीणमग्ग'मिति सिद्धिमार्ग किमिति विशिष्यते ?, सुखदु खोभयोपग्राहकत्वात्पुद्गलानां तेषां च सिद्धौ सर्वेषां सगाभाव इति ।

उ०-सत्यं, पौद्गलिकसुखमपि 'सर्व विवेकिनां दु.ख'मिति सर्वदु खाभाव इति ॥

प्र० ७३५-ननु प्राणव्यपरोपणे स्वीकृते ज्ञानादिभावप्राणापहारिसर्वाश्रवपरित्याग आपन्नस्तथा च किं शेषव्रतैरिति ? चेत् ।

उ०-सत्य, तत्त्वत इदमेव मूलव्रतं शेषाण्युत्तरगुणा इति चूर्णि', पर शेषव्रतोच्चाराद् द्रव्यप्राणवधविषयमेतद्, तेन वीतरागस्यापि महाव्रतानि, किञ्च-पारिग्रहिक्यभावनिश्चय आरम्भिक्यभावे य' स सर्वथा परिग्रहविरतस्याद्यमपि व्रतमिति निश्चय ॥

प्र० ७५४–ननु प्रत्यागमीयत्र वर्त्तमानाप्रयोगेऽपि 'जाणामि'त्यादियोगेऽनागतविषयता गम्यते पर उवसपज्जित्ताणं'-विहरामीत्यत्र कथमिति ? चेत्।

उ० 'सम्मामीप्ये सद्वद्वे'तिसूत्रेण विहरिष्यामीत्येव तदर्थः, प्राग्रेण पाक्षिकान्ते विहार इति ज्ञापनं चात इति ॥

प्र०-७५५–ननु कर्मसु अष्टसु प्राक् कस्योदयः कथं च तेषां बन्ध ? इति चेत्।

उ०-आदौ ज्ञानावरणोदयस्तदनु दर्शनावरणस्य ततो दर्शनमोहनीयस्य मिथ्यात्वेन सकलबन्धहेतूनां समन्वयादनादि-सर्वकर्मबन्ध इति विशेषमूलस्य सामान्यापेक्षयेद साकारेतरापेक्षयानुभवे दर्शनमात्रो, शेषविपर्यासे तत्त्वप्रतीतिघात ततश्च मिथ्यात्वात् सर्वबन्ध, एव च मिथ्यात्वेन सर्वबन्धनियमो न त्वनेन तस्येति ॥

प्र० ७५६–ननु विरतिरनाश्रवफला, अनाश्रव, संवरफल, संवर तपःफल, तपो निर्जराफलमिति वाक्यानि नियामकानि यथाक्रमश्चिति ?।

उ०–नियामकानीति गृहाण, जना हि मिथ्यात्ववदव्रता-न्यपि कर्मबन्धहेतुत्वेनाध्यवस्यन्ति, ततो नाविरतानामनाश्रव, संवरो हि रोध आश्रवानां नत्वभावस्तेषां तत एकेन्द्रियादीनां नाप्राप्तहेतूनां संवरता, संवरश्चागमिष्यत्कर्मरोधार्थं स चा-गतकर्मपर्यवसानफल, अत एव तत्त्वेषु आश्रवसंवरनिर्जराक्रम, एवविधानामाराधकत्वनियमात् सकामैव सा, नहि विराधका सकामनिर्जरावन्तश्चेति वक्तुमपि युक्त सचेतसां कर्मादिश्रद्धा-वतामप्यपरेषां बालतपोभावात्, अकामनिर्जरकाद्देदेनोपन्या-सस्तु मिथ्यात्वानर्थाधिक्यदर्शनार्थं इति, अभव्यानामष्टतत्त्वी-श्रद्धानात्सकामनिर्जरकत्व स्यात् ?, न ते तथा, न चाराधका न चानुमोद्या इति ॥

प्र० ७५७–ननु मिथ्यादृश औपक्रमिकीवेदनावन्त आभ्युप-गमिकीवेदनावन्तो वेति ?।

उ० -औपक्रमिक्येव सा तेषां, तत्तपसां केवलोदीरणारूप-त्वात्, अत एव सम्यग्दृशां पञ्चेन्द्रियतिरश्चां मनुष्याणां च कर्मक्षपणार्थमाभ्युपगमिक्या अपि वेदनाया सम्भवात्, शेषा-स्त्वौपक्रमिकीमेव वेदनां वेदयन्ते नाभ्युपगमिकीमिति मलयगि-रय, तथा च सकामा सुदृशामेवेति नियम सुसम्पन्न, अका-मक्षुदादिमतामकामनिर्जरकताकथन तेषां देवत्वहेत्वर्थम्, अत

प्र० ७४४–ननु प्रत्याख्यामीत्यत्र वर्त्तमानाप्रयोगेऽपि'जावजीवाए'त्यादियोगेऽनागतविषयता गम्यते पर उवसपज्जित्ताणं'-विहरामीत्यत्र कथमिति ? चेत् ।

उ० 'सत्सामीप्ये सद्वद्वे'तिसूत्रेण विहरिष्यामीत्येव तदर्थ, प्रायेण पाक्षिकाद्यन्ते विहार इति ज्ञापन चात इति ॥

प्र०–७४५–ननु कर्मसु अष्टसु प्राक् कस्योदय कथं च तेषां बन्ध ? इति चेत् ।

उ०–आदौ ज्ञानावरणोदयस्तदनु दर्शनावरणस्य ततो दर्शनमोहनीयस्य मिथ्यात्वेन सकलबन्धहेतूनां समन्वयादनादि-सर्वकर्मबन्ध इति विशेषसमूहस्य सामान्यापेक्षयेदं साकारेतरापेक्षयानुभवे दर्शनमादौ, बोधविपर्यासे तत्त्वप्रतीतिघात ततश्च मिथ्यात्वात् सर्वबन्ध, एव च मिथ्यात्वेन सर्वबन्धनियमो न त्वनेन तस्येति ॥

प्र० ७४६–ननु विरतिरनाश्रवफला, अनाश्रव, संवरफल, सवर तप फल, तपो निर्जराफलमिति वाक्यानि नियामकानि यथाकथञ्चिद्वेति ? ।

उ०–नियामकानीति गृहाण, जैना हि मिथ्यात्वचदव्रता-न्यपि कर्मबन्धहेतुत्वेनाध्यवस्यन्ति, ततो नाविरतानामनाश्रव, सवरो हि रोध आश्रवानां नत्वभावस्तेषां तत एकेन्द्रियादीनां नाप्राप्तहेतूनां सवरता, संवरश्चागमिष्यत्कर्मरोधार्थ' स चागतकर्मपर्यवसानफल, अत एव तत्त्वेषु आश्रवसंवरनिर्जराक्रम, एवविधानामाराधकत्वनियमात् सकामैव सा, नहि विराधका सकामनिर्जरावन्तश्चेति वक्तुमपि युक्त सचेतसां कर्मादिश्रद्धावतामप्यपरेषां वालतपोभावात्, अकामनिर्जरकाद्बेदेनोपन्यासस्तु मिथ्यात्वानर्थाधिक्यदर्शनार्थ इति, अभव्यानामप्येतत्त्वीश्रद्धानात्सकामनिर्जरकत्वं स्यात् ?, न ते तथा, न चाराधका न चानुमोद्या इति ॥

प्र० ७४७–ननु मिथ्यादृश औपक्रमिकीवेदनावन्त आभ्युपगमिकीवेदनावन्तो वेति ?।

उ०–औपक्रमिक्येव सा तेषां, तत्तपसां केवलोदीरणारूपत्वात्, अत एव सम्यग्दृशां पञ्चेन्द्रियतिरश्चां मनुष्याणां च कर्मक्षपणार्थमाभ्युपगमिक्या अपि वेदनाया सम्भवात्, शेषास्त्वौपक्रमिकीमेव वेदनां वेदयन्ते नाभ्युपगमिकीमिति मलयगिरय, तथा च सकामा सुदृशामेवेति नियम सुसम्पन्न, अकामक्षुदादिमतामकामनिर्जरकताकथन तेषां देवत्वहेत्वर्थम्, अत

निर्जरा तु गुणमाहात्म्याध्यवसायादिति विशेष' ॥ द. ८-चू० ॥

प्र० ७५२-'मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवल'-मित्यादिवचनप्रामाण्यात् द्वादशगुणान्त्यभागे ज्ञानावरणप्रकृतीनां पञ्चानामपि क्षय इत्यविवादापन्नं परं केवलमित्युक्ते क्षयिकमत्यादि-चतुष्काविर्भावाभ्युपगम' किं नाभ्युपगम्यानामभ्युपगमार्ह ?, न च वाच्यं यद्यदावरण क्षीयते न तत्तदाविर्भाव आवश्यकः, अन्यथा तत्क्षयस्य नैरर्थक्यादिति ।

उ०-चतुर्णां चक्षुर्दर्शनाद्यावरणानां पञ्चानां च निद्राणामावरणत्वेऽपि दर्शनस्य तदावरणक्षये केवलदर्शनावरणविलयज-केवलदर्शनमन्तरा नान्यो गुण आविर्भवति, परं चाष्टविंशति-विधस्यापि मोहस्य क्षये न हि सम्यक्त्ववीतरागताभ्यां विनाऽपरगुणानामाविर्भाव , सिद्धत्वे त्वेक एव सम्यक्त्वगुणोऽपर्य-वसानो मोहक्षयोद्भूत , किञ्च-दानाद्यन्तरायपञ्चकक्षय' स्वभाव-सिद्ध' सिद्धेषु परं न तत्र दानादीनीति निभालनीय, स एवावरणक्षयस्य प्रभावो यद्गुणो न प्रतिबध्यते, आविर्भावन तु गुणानां स्वभावस्थितानामिति ज्ञानावरणपञ्चकक्षयेऽप्येकस्यैव केवलज्ञान-स्याविर्भावो न विरोधावहः ॥

प्र० ७५३-आवरणानां क्षयोपशमे गुणानामाविर्भावोऽभिमन्यते, क्षये तु तेषां गुणानामेव मूलत एव क्षय प्रतिपाद्यते तज्ज्ञानल्पाश्चर्यकरं किमिति ?, न चैषोऽनुक्तोपालम्भ ? 'णट्ठंमि उ छाउमत्थिए नाणे'त्तिवचनादिति ।

उ० - यथा भास्करे उद्गते चन्द्रप्रभादीनां ज्योत्स्ना-प्रसराद्यभावोऽभिधीयते निरभ्राभ्रस्थायिनां तथैतत्, सति सप्तमीय च 'यद्भावो भावलक्षण'मितिसूत्रसिद्धा, ततो नात्र केवलोत्पादे हेतुस्तद्भाव , किञ्च-यथा दिनकरप्रभाप्रसरे चन्द्रादीनां न प्रभाऽपगच्छति सा त्ववस्थितैव तथा अत्र मत्यादीनां छाद्मस्थिकज्ञानानामुपयोगप्रसरो न, केवलवेदसा सर्वद्रव्य-पर्यायसाक्षात्कारात्, न हि य. पाटीगणितनिपुण सक्रमिकांक-वृद्धिकरणोपयुक्तः, एतदपि व्यवहारेण पञ्चविधं ज्ञानमात्मस्वा-भाविकमित्यभ्युपगमपटुना, निश्चयेन तु तत्तदिन्द्रियाद्यालम्बन-जातभेदायाश्चेतनाया एवाभिनिबोधिकादीनि नामानीत्यभ्युपग-मवता तु न किञ्चित्सहावस्थानाभावे नाशे वा मत्यादीनां नारे कावकाश ॥

प्र० ७५४-ननु आवरणनाश आवार्यस्याप्रतिबन्धक सतो

एव तस्यार्थेपि प्रयं मोमतायतायता 'अणुकंपे तिगाथया प्यस मारीमामपि सकामत्वनियमप्रसङ्गः ॥

प्र० ७४८ ननु हताहारकसमुद्घातानां मारकैकेन्द्रिया दिपूनातं स्यात् कतिहततसमुद्घातानां वा स ? इति चेत्।

उ०-नारकादीनां तत्समुद्घातमपस्य माव मावनुर्यस्त ग्राम्य चतुर्थमरममय पवेति मावीततचतुष्कमन्वयेति ॥

प्र० ७४९-ननु यास्तपस्विनां तपसंयमौ श्लाघ्यौ कथं न ? तयोरपि गुणत्वात् गुणानुरागस्य च शुभत्वा दवमावसि वत्यार्विततप्रशंसने च कथं न मिथ्यात्वप्रशंसापत्तिरिति ? चेत्।

उ०-सत्य, स एव हि गुणः श्लाघ्य सम्यग्मिश्चोऽनु यन्यगुणः, तेषां तु तौ गतस्तामपरिश्रमरूपाविति श्लाघनीयौ ॥

प्र० ७५०-ननु मिथ्यात्वशामपि अहिंसासत्यादीनि क्षायोप शमिकानि न वा ? आद्ये कथं नानुमोद्यानि ? तेषामात्मशुद्धि रूपत्वात्, अन्त्ये, कथं नातिचारतेति ?।

उ०-सत्यं, स हि लोकपुरुषयत्नसाध्य, न अनन्तानु-

न्धिक्षयोपशममन्तराऽन्यकषायादिक्षयोपशमः साध्यः, अभिचार कारादिसेवासम हि तत्सर्वं यत 'उवसमियखइयखओवसमिया भावा सम्मद्दिट्ठिणो चेव'त्ति (वृ० सू० ४) मार्गानुसारिणी तु फलप्रधानेति शुभक्रियावच्छ्लाघ्येति ॥

प्र० ७५१-ननु इन्द्रियाणां कषायाणां च प्रणिधिहिंसादिवत् भाव्याऽप्राशस्त्ये किं वा मैथुनवत्सा ?, यतो मैथुनस्य रागद्वे षाविनाभावित्वात्तस्य सा नियता, पापबन्धोऽपि तत एव तस्मि न्नियतः, इन्द्रियकषायप्रणिधिरपि तद्रूपेवेति वीतरागाणां न सेति।

उ०-सत्यं प्रथमं तावत्प्रशस्तरागद्वेषावन्तरा वीतरागतैव न, धर्मादिभ्यामप्रास्तम्मूलत्वात्ततो नमस्कारादेस्तथात्वात्, एवं चावेशाभावेऽपि प्रशस्तपार्वीतरागत्वार्थिनां कर्तव्यतापत्ति, प्राशस्त्यं च रागस्यार्हदाद्यासन्नतद्गुणगोचरतया द्वेषस्य तु मिथ्या त्वाद्याविरतिविषयतया, तथा च श्रीजिनादिगुणशब्दश्रवणे मोदमानस्य नृत्यतः समवसरणादिगतप्रसूनप्रकरगंधरसास्वा दकुङ्कुमादिस्पर्शेन च तथाभवतश्चेन्द्रियप्रणिधेः प्राशस्त्यं, एवमेवार्हदाद्यवर्णवादे क्रोध परवादिविषये मानमाये अर्हत्पूजादौ च लाभं कुर्वत प्रशस्तकषायप्रणिधिः मयरं, पुण्योपचयोऽस्मात्

निर्जरा तु गुणमाहात्म्याध्यवसायादिति विशेष' ॥ द. ८–चू० ॥

प्र० ७५२–'मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवल'-मित्यादिवचनप्रामाण्यात् द्वादशगुणान्त्यभागे ज्ञानावरणप्रकृतीनां पंचानामपि क्षय इत्यविवादापन्नं परं केवलमित्युक्ते क्षयिकमत्यादि-चतुष्काविर्भावाभ्युपगम' किं नाभ्युपगम्यानामभ्युपगमार्ह ?, न च वाच्यं यद्यदावरण क्षीयते न तत्तदाविर्भाव आवश्यक', अन्यथा तत्क्षयस्य नैरर्थक्यादिति ।

उ०–चतुर्णां चक्षुर्दर्शनाद्यावरणानां पचानां च निद्राणामा-वरणत्वेऽपि दर्शनस्य तदावरणक्षये केवलदर्शनावरणविलयज-केवलदर्शनमन्तरा नान्यो गुण आविर्भवति, परं चाष्टाविंशति-विधस्यापि मोहस्य क्षये न हि सम्यक्त्ववीतरागताभ्यां विनाऽ-परगुणानामाविर्भाव , सिद्धत्वे त्वेक एव सम्यक्त्वगुणोऽपर्य-वसानो मोहक्षयोद्भूत , किञ्च–दानाद्यन्तरायपञ्चकक्षय. स्वभाव-सिद्ध सिद्धेषु परं न तत्र दानादीनीति निभालनीयं, स एवाव-रणक्षयस्य प्रभावो यद्गुणो न प्रतिबध्यते, आविर्भावन तु गुणानां स्वभावस्थितानामिति ज्ञानावरणपञ्चकक्षयेऽप्येकस्यैव केवलज्ञान-स्याविर्भावो न विरोधावहः ॥

प्र० ७५३–आवरणानां क्षयोपशमे गुणानामाविर्भावोऽभि-मन्यते, क्षये तु तेषां गुणानामेव मूलत एव क्षय प्रतिपाद्यते तज्ञानल्पाश्चर्यकरं किमिति ?, न चैषोऽनुक्तोपालम्भ ? 'णट्ठंमि उ छाउमत्थिए नाणे'त्तिवचनादिति ।

उ० – यथा भास्करे उद्गते चन्द्रप्रभादीनां ज्योत्स्ना-प्रसराद्यभावोऽभिधीयते निरभ्राभ्रस्थायिनां तथैतत्, सति सप्तमीय च 'यद्भावो भावलक्षण'मितिसूत्रसिद्धा, ततो नात्र केवलोत्पादे हेतुस्तद्भाव , किञ्च–यथा दिनकरप्रभाप्रसरे चन्द्रा-दीनां न प्रभाऽपगच्छति सा त्ववस्थितैव तथा अत्र मत्यादीनां छाद्मस्थिकज्ञानानामुपयोगप्रसरो न, केवलवेदसा सर्वद्रव्य-पर्यायसाक्षात्कारात्, न हि य. पाटीगणितनिपुण सक्रमिकांक-वृद्धिकरणोपयुक्तः, एतदपि व्यवहारेण पञ्चविधं ज्ञानमात्मस्वा-भाविकमित्यभ्युपगमपटुना, निश्चयेन तु तत्तदिन्द्रियाद्यालम्बन-जातभेदायाश्चेतनाया एवाभिनिबोधिकादीनि नामानीत्य'युपग-मवता तु न किञ्चित्सहावस्थानाभावे नाशे वा मत्यादीनां नारे-कावकाश. ॥

प्र० ७५४–ननु आवरणनाश आवार्यस्याप्रतिबन्धक सतो

स्त्वत एव सलेश्याकास्तर्हि 'ता कर्मबन्धस्थितिविधाऽय' इतिवचनात् 'स्थितिपाकविशेषस्तस्य भवति लेश्या विशेषेणे'ति वचनाच्च तत्कर्मणां बध्यमानानां कियती स्थितिरिति ?

उ०-योगेनानुसमय बध्यमानानां कर्मपुद्गलानां प्रकृत्यादिभेदा भवन्तोप्यनुसमयमवधातुं आवश्यकमेतत् कर्मणां प्रकृतिप्रदेशबन्धौ योगाना तारतम्यानुकारिणौ शुभास्वशुभासु वा परमनुभव' स्थितिश्च न तथाविधे, कषायाणां तारतम्यानुकारी यत· स्थितिबन्ध, परं तद्विशुद्ध्युत्कर्षेण त्रिस्थिति शुभानामपि प्रकृतीनां, तत्समूलोच्छेदे तु न शुभानामशुभानां वा स्थितिबन्ध, सति च तस्मिन्नवश्यमबाधाकालेन भाव्यमिति, न गतकषायाणां स्थितिबन्ध, एकसमयावस्थानं तु निष्कषायकर्मणां वेदनसमयरूपमेव, अत एवैष्यत्समयेऽकर्मत्वीभावः, अनुभावबन्धस्तु कषायापहतिजन्य शुद्धतारूप, सा चानन्यसाधारणाऽकषाये इति परमशुभ एवानुभागबन्धस्तेषामिति ॥

प्र० ७५८-ननु केवलिनां न चेद् भावमनस्तर्हि यथार्थवादिता कथं ? यतः स आप्तो वक्ता य प्राग्यथार्थज्ञानेन यथावस्थितार्थानवबुध्यते ततश्च तथाज्ञातार्थाननुसृत्यैव तथारूपतयैव प्रज्ञापयति; एतच्च सर्वमपि तथाविवक्षोद्भवं विवक्षा च भावमनसोऽनभ्युपगमान्न केवलिष्वभ्युपगन्तुं शक्येति शासनप्रणयनं यथास्थितार्थवादितारूपं कथमिति ?

उ०-केवली हि क्षीणज्ञानावरणतया सर्वानर्थानुपलभ्य ये तत्र प्रज्ञापनीया उपलभ्यन्ते तान् तीर्थकरनामोदयस्वाभाव्याद् भाषते वाग्योगसहकारात् अविवक्षोद्भवत्वाच्च तन्न भावश्रुते कारणमपि तत्कार्यरूपमिति ॥

प्र० ७५९-ननु यदि केवलिषु न भावश्रुतं, विवक्षाया अभावात् क्षायोपशमिकमत्यादिसमधर्मत्वाच्च तथाऽप्यकुर्वद्रूपस्याऽपि कारणस्य कारणतामभ्युपगच्छता व्यवहारेण कुर्वद्रूपकारणस्यैव कारणतामभ्युपगच्छता नाममात्रपरावृत्तिरूपाणां मत्यादीनां सहावस्थानमनभ्युपगतमप्यभ्युपगम्यते तर्हि तत्त्वार्थीयं 'एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्य' इति सूत्रं कथं गमनीयमिति ।

उ० – भाष्ये हि तस्य मतद्वय मत्यादीनां सहावस्थानेतरविषय केवलेनेति तत्सूत्रं निश्चयाधिकृतमिति न व्यवहारपक्षेण विरुद्ध नयानां विरुद्धानामपि परस्परमनधिक्षेपेण स्वम-

पे'त्यादिभि' सूत्रैरष्टानामपि कर्मणामाश्रवा दर्शितास्तर्हि कृतत्वादिभि कथ्यमाना कस्य कर्मण आश्रवा ? इति चेत्।

उ०–सत्यं, सकषायत्वात्साम्परायिकत्वाच्चाष्टानामप्याश्रवा ॥

प्र० ७६४-ननु 'शुभ पुण्यस्ये'त्युक्त्वापि कथ पुण्याश्रवो न दर्शित ? इति चेद्।

उ०–'भूतव्रत्यनुकम्पे'त्यादिभिर्दर्शित एव स. ॥

प्र० ७६५–ननु जीवाजीवाधिकरणत्वेऽप्याश्रवाणां किमिति हिंसाविषया एव ते उक्ता ? इति।

उ०–मृषावादादिष्वपि हिंसैव प्रयोजिका प्रयोजनरूपा वेति उपलक्षणं वा शेषाश्रवाणा ॥

प्र० ७६६ – ननु प्रत्याख्यानावरणादिक्षयोपशमादेश्चारित्रं लभ्यते ततो वास्तवी चारित्रमोहनीयतैषां परमनन्तानुबन्ध्याद्यष्टकस्योपशमादिष्वपि सत्सु नैव लभ्यते सामायिकादिचारित्रमिति कथ चारित्रमोहनीयतेति ?।

उ०–सत्यं, परमपूर्वकरणेनानन्तानुबन्धिचतुष्के भिन्ने एव चारित्रवस्तु प्रीति प्रादुर्भवति, पश्चादेव सम्यक्त्वमाप्नोति तत्प्रतीतिरूपमिति चारित्रप्रीतिरोधकत्वाच्चारित्रमोहनीयता युक्तैवैषां, अप्रत्याख्यानावरणक्षयोपशमे चासक्तित शक्यभावाच्च यद्यपि न स्वीकरोति सामायिकचारित्रं परं तत्क्षयोपशमादस्थिमिंजाप्रेम्णाऽनुरक्तो भवति चारित्रे तद्वत्सु चेति तेषामपि तथात्व युक्तमेव ॥

प्र० ७६७–नन्वप्रत्याख्यानावरणानामुपशमे औपशमिकावस्थायामपि देशविरतिमान् स्यात् क्षयोपशमे च परमार्हततत्वेन वर्तेत परं क्षये किं स्यादिति ? चेत्।

उ०–सत्यं, प्रतिबन्धकानां क्षयेऽवश्य प्रतिबद्धस्य गुणस्य प्रादुर्भाव स्यात् परं तत्प्रवृत्तेर्न नियम, सिद्धेषु कथञ्चिदपि भवस्थकेवलिषु सर्वथा दानाद्यन्तरायक्षयेऽपि सर्वविषयकदानाद्यभावादिति ध्येयमिति ॥

प्र० ७६८–ननु देवतया ग्रहीष्यस्यवश्यमिति सेचनकायादिष्टं तेन स्वयमेवालानमूलमागतो रात्राविति सत्यं न वेति चेद्।

उ०–अस्त्येतदुक्तं केनचिद्, तत्त्वतस्तु तथादेशोऽपि आलानस्तम्भं तु प्रलोभ्य स्थाने स्थापितैर्मोदकैस्तु प्रापितो राजपुरुषै, परमवधिना श्रीनन्दिषेणं पूर्वोपकारिणं ज्ञात्वा यदा स आरूढो भवति विगतमदो जायते इति ॥

प्र० ७६९ ननु तस्यकिम उमापतमहेश्वर इत्यभिधा कथं केन कृतेति ? चेत् ॥

उ०—राज्ञोऽन्तःपुरं प्रविश्यापि पेढालसुतः पुराणां नारीं विनाश्य मानुषीनभ्यभ्यर्थनेन पेढालं हतवान् ततेमेन तस्याभिधा महेश्वर इति कृता नन्दी नन्दीश्वरमेत्याख्ये समर्थे द्वे मित्रे तस्य ताभ्या मेव कुम्भस्य तस्य माहात्म्यं वैदेशा(दा)दिषु देशेषु प्रवर्तितं तत स्यानाश्चपुष्पसंयोगपूजा तत्र विशेषेणेति ॥

प्र० ७७०—ननु केचित् साधव सम्प्रतिराजात् कौशाम्ब्या नगर्यां शासितस्य साधुविहाररहितं देशमपि व्यामार्यमामनन्ति, तत्र किं साध्यमिति ?।

उ०—बृहत्कल्पगत कौशाम्बीसत्रिदेशविषयं पाठमाश्रित्यासौ तां नगरीं पृष्टित्वैवं प्रत्यभिज्ञ वासकातरि प्रागमनाम त्वत्र प्रयोजनाय भगवान् वीरोऽवन्तीमेत यावत् आर्यमहागिर्योः प्रागेव सम्प्रतिराज्यस्य पायद्विशतिप्रत्येककाल विजहुरिति ॥

प्र० ७७१—ननु आवश्यकादिक्रियाकरणकाले 'भंते' इत्यामन्त्रणसामर्थ्यात् स्थापना(ऽ)वश्यं कार्या परं के तस्यां स्थाप्या ? इति चेत् ।

उ० – गुरुप्रमुखाऽऽवश्यकादिषु क्रियासु स्वकीयानामाचार्याणामेव स्थापना युक्ता परं चैत्यस्तवश्रुतस्तवसिद्धस्तवादिषु जिनेश्वरश्रुतसिद्धानां तस्या स्थापना पञ्चमकादिषु च एवाहरणे गुरूपानां सम्मवसरमस्पर्शोपर्यं कार्या स्थापनेति ॥

प्र० ७७२—मन्वर्हदादीनां शरीरसम्बन्धात्मनेव स्थापना पर सामाराधने श्रुतज्ञानस्य चित्रकमपि स्थापना कथं ? स्यात्रिति चेत् ।

उ०—सत्यं पुस्तकरूपेणांगसमुदायस्य पञ्चाशिष्याचाराङ्गादीनां स्थापना कार्या अत एवावश्यवाचित्वादाचारादीनामक्षराभ्योपलक्षितस्यमाश्रित गणधरैः, वामिस्थापनमारा तु मस्यधिमनःपर्यायकेवलानामपि स्यात्स्थापना चित्रकर्मणीति ॥

प्र० ७७३—ननु स्मरणमत्यमिज्ञानतर्कोद्यो मतिज्ञानं श्रुतज्ञानमन्यदेति चेत् ।

उ० अनुक्ता मनोमात्रगतास्ते मतिज्ञानं, श्रुतज्ञानमाता निर्दिश्यमानास्ते श्रुतज्ञाने, अवधिना मनोज्ञानेन वा आत्मस्ते तु तत्रैव केवले तु नैव ते प्रमाणनयतत्त्वादिषु तेषां मतिज्ञानस्यैव भजन तु व्यवहारिकास्तामाश्रित्य तत्र ते तद्गुणपव पत ॥

प्र० ७७४ – ननु लिप्यक्षरेषु आर्यक्षेत्रलिपिभेदापेक्षया भवन्तु खरोष्ठ्यादयोऽष्टादशब्राह्मीलिपिभेदा परन्तु व्यञ्जनाक्षरे संस्कृतप्राकृतभेदो कथं ? समानोच्चारादिति चेत् ।

उ० – सत्यं, परं ऋकारलृकारैदौत सदीर्घादिभेदा संस्कृते तथैवास्वरव्यञ्जनानि च विसर्गजिह्वामूलीयोपध्मानीयाश्च, न च ते प्राकृते उच्चार्यन्त इति नायुक्तो भेद इति ॥

प्र० ७७५–ननु योऽवधिज्ञानी तैजसशरीरं जानाति स स्वस्य परस्य वा कियतो भवान् वेत्तीति ? चेत् ।

उ०–अतीतानागत भवपृथक्त्वं स उभयोर्जानातीति ॥

प्र० ७७६–ननु अवधिज्ञानावरणीयानां सर्वात्मप्रदेशेषु समः क्षयोपशमो भवति विषमो वेति ? चेत् ।

उ०–सर्वदिक्कावधिमतां स सम एव, अन्तगताद्यवधिमतां तु विषमोऽपि, यथा द्रव्येन्द्रियाभ्यन्तरनिवृत्तौ तत्तदिन्द्रियावरणक्षयोपशमवतामात्मप्रदेशानां तत्तदिन्द्रियस्थाने निवर्त्तनं भिन्नक्षयोपशमादिति, सम्भिन्नश्रोतसः सर्वाङ्गेषु सर्वेन्द्रियक्षयोपशमः ॥

प्र० ७७७–ननु गमिकश्रुतस्य किं लक्षणमिति ? चेद् ।

उ०–यद् भङ्गरूपं गणितरूप सदृशालापकं वा तद्गमिकश्रुतमिति ॥

प्र० ७७८–ननु मन पर्यायज्ञान गणभृतां कदोत्पद्यते इति चेत् ।

उ०–सम्यक्त्वचारित्रप्रतिपत्तिसमय एव, अत एव'जो समत्तं चरित्तं च जुगव पडिवज्जेइ'त्युक्त्वा मन पर्यायस्य प्रतिपद्यमानो मत्यादे प्रतिपद्यमानतया व्याख्यात इति ॥

प्र० ७७९–ननु निश्चयवक्तव्यतायामेकमेव केवलज्ञानमिति कथमिति ? चेत् ।

उ०–आत्मा हि सर्वद्रव्यभावज्ञातृस्वभाव' तदेव च केवलं सर्वज्ञातृत्वं, तत्र विषयादिज्ञानांशस्यावारकं तद्विलयं चाश्रित्य मतिज्ञानावरणमतिज्ञानव्यपदेशः, एवमभिलाप्यादीनि ज्ञेयान्याश्रित्य शेषावरणज्ञानव्यपदेश परं भिन्नानि परोक्षत्वादसम्पूर्णप्रत्यक्षत्वाच्चातादृशं तु केवल, अत एव केवले एकज्ञानदर्शनचारित्रोपयोगिता ॥

प्र० ७८०–ननु 'सुयनाणं महड्ढीयं'ति कथमिति ? चेत् ।

उ०–मतिअवधिमन पर्यवकेवलज्ञानानामपि येषां प्रकाशनं

रभेदात् द्वादशकं विकलानामपि पर्याप्तेतरभेदषट्कं सामान्येन नरदेवदुर्गतिरिति पापफलविपाके, पुण्यफलविपाके व्यन्तराष्टकभवनपतिदशकज्योतिष्कपञ्चककल्पोपपन्नद्वादशकग्रैवेयकानुत्तरभरतैरवतमहाविदेहाख्यकर्मभूमित्रिकहरिवर्षाद्यकर्मभूमिषट्कलोकान्तिकनवकै स्युरेव भेदानां पञ्चपञ्चाशदिति सम्भाव्यते, सुधीभिरन्यथाप्यूह्येत न कश्चित्प्रतिबन्ध इति ॥

प्र० ७८५–ननु भगवान् गौतम श्रमणे भगवति महावीरे श्रीवर्धमानस्वामिनि चेत् चिरसंसृष्टादिविशेषणस्तर्हि प्रतिबोधात्प्राग्राग कथं नेति ? चेत् ।

उ०–रागार्हवस्तुप्राप्तिकाल एव रागोदय, मिथ्यात्वक्षयादनन्तरमेव च प्राग्जन्मप्राप्तसम्यक्त्वधरे योग्यता तद्रागस्य, ततो न प्राग्रागोदयस्तद्विषयस्तस्येति ॥

प्र० ७८६–ननु शुद्धबुद्ध्या अशुद्धमाद्रियमाण एक. अन्यश्च शुद्ध शुद्धबुद्ध्याऽनाद्रियमाण इत्यनयो. को भाविभद्र ? इति चेद् ।

उ०–शुद्धमनाद्रियमाणस्तु भवाभिनन्द्येव, शुद्धबुद्ध्याऽशुद्धमाद्रियमाणोऽवश्यमादिमध्यान्तभद्र, पर शुद्धत्वकारणानि विदन् तद्वन्तमप्यन्त करणमालिन्यात् परमार्थतोऽशुद्धोऽपि शुद्धबुद्ध्याऽऽदरपात्रं जायमानो नेतव्य नाशुद्धिकारणवन्तं शुद्धबुद्ध्याऽशुद्धमाराधयन् भाविभद्र, एवं शुद्धदेवगुरुधर्मबुद्ध्या कुदेवाद्या अशुद्धत्वान्न त्राणं अन्त करणेनाशुद्धोऽप्यभव्यो मिथ्यात्वमवतपरिणाममाकर्षकाले आयात· साधुश्च स्यादेव भाविभद्राणामादरपात्रमिति ॥

प्र० ७८७–ननु मैत्र्याद्यासु चतसृषु भावनासु सतीषु किमिति'मित्ती मे सव्वभूएसु'त्युद्घुष्यते पुनः पुनरिति ? चेत् ।

उ०–सत्य, मैत्र्यादिभावयुक्तस्यैवानुष्ठानस्य धर्मत्वाच्चतसृणामपि तासामावश्यकता धर्मार्थिना, पर मुदितादीनां तिसृणामपि भावनानामुत्पत्ते स्थितेर्वृद्धेश्च मैत्र्यभाव एव प्रतिरोधकः, सत्यामेव तस्यामन्यासां मुदितानामसतीनामुत्पत्त्यादे सौलभ्यमितिहेतो· सोच्यते पुन पुनरिति, किञ्च–मैत्री पापप्रतिघातरूपा, परास्तु गुणबीजाधानरूपा, न च शक्य पापप्रतिघातमन्तरा गुणबीजाधानं विधातुं, विहिते पापप्रतिघाते चात्मस्वरूपत्वाद् गुणानां स्यादेवायत्नतोऽपि प्राकट्यमितिहेतोरपि प्रागेवोपदेश्याऽऽदेया च मैत्रीति सैव पुनः पुनरुच्यते इति, क्षामण च 'खामेमि सव्वजीवे' इत्यादिना 'आयरिय उवज्झाए' इत्यादिना 'खमिय

उ०-विवक्षिताभिकारमोक्षदर्शिन्यः कथा पूर्वभवप्रसक्ता-नुषक्तवृत्तान्तोपेतानि चरितानि, उपमितिभवप्रपञ्चा कथा तु कल्पितमिव कल्पितेति ॥

प्र० ७२५-ननु आचार्योपाध्याययोः शय्यासंस्तारकादेस्त पादादिभिः संघट्टितेऽपराधे गमागमेऽप्यकथमाशातनेति ? चेत्

उ०-आचार्यवत्राचार्योपकरणानामप्याराध्यत्वात् अन्यथा तु जीवस्यैव गुरुत्वात् तद्गुरुशरीरस्यापि भक्तिराशातना च न स्यात् ? इत्यतस्तयोः आसनं गमनागमने च तेषामननुज्ञाप्य चरणं तत्र प्रवेश आशातना ॥

प्र०-७२६-ननु तिस्थयरा मे पसीयंतु' चिवचा वीतरागा-नाश्रित्य कथमाशीरपि प्रयुज्यते ? इति चेत्।

उ०-ते नैव प्रसीदन्ति परं तत्प्रसत्तेरभ्यासात् कार्यमात्म-न्यागमयन् तथा वक्ति यथा 'धाम्य पर्यस्य चारित्रे'ति अतोऽप्रत्य-क्षिप्ते तस्याचार्ये शिष्या प्रसादप्रेक्षी तथाभूत एव च मोक्षा दीति कथ्यते, अत एव 'पुण्णा जस्स पसीयंति विज्जा मंतुव सुप मिच्चादि, अन्यथा प्राप्तपर्यायाय परिणामिने शिष्याय सूत्रार्थयोर्यथार्थं दानमाचार्योपाध्यायमाधाय कर्तव्यमस्येवेति, विशेषस्तु वर्यं प्रसन्ना एव कुर्म इति पूज्यवाक्येषु सत्स्वेवेति ॥

प्र० ७२७-ननु सम्यक्कर्ममर्मभणने सर्वसंगवर्जितानां कथ पदार्थमिति परेषामपि स्वसन्निवसाधूनामर्थाय तथाभणने न एव धारयेयुरिति न सम्भव इति चेत् ।

उ० श्रावकाणां तथाविधतेरभावास्तेषामर्थितोऽन्यथा चाऽ र्थाय न तत्प्रणोदितिसद्भावात्, तथा च केचिच्छ्रावका मन्येयुरेवा एवा ये सपमान्वितस्तेन न साधूनामिताः परं साधुना तथा-भूतभावकानां ममत्वमुत्पन्नेव न च तज्जुषस्य कस्यापि पात्र मन्येयाम् ॥

प्र० ७२८-ननु श्रीमावश्यके समाचरणे च सत्पुष्टिकानां पञ्चानां परमेष्ठिनां नमस्कारः क्रियते श्रीमदावश्यकमसौ नियू क्तिकानां, तत्र किं तत्त्वमिति ? चेत् ।

उ०-आवश्यके समाचरणे च नमस्कारफलानि सोऽस्या-पि व्याख्या कथ्यते तत्प्रसक्तः प्रस्तुतमित्यादौ समाचरणपूर्वक मेवागुरेवक्रमाभिसम्बन्धद्वारा माहात्म्यस्य ख्यापनाय परत्र च समाचरणस्याव्यवच्छेदाज्ञापनाय, व्याख्याप्रकृतिकारस्तु तदारम्भे निर्विघ्नपरिसमाप्त्यर्थं तत्कृत सर्वकालीनमासमनाम्नायापर

गुरूणां स्मृतिनमस्कारार्थं पञ्चनमस्कारानूचुरिति, न तत्रोद्देश्य-
चूलिकाया उक्ति, ध्वनित च व्याख्याकारै प्रयोजन दर्शयद्भि
'पढमं हवइ मगल'मित्युल्लेखेनेति प्रोक्तोद्देश्ये विना त्वभ्या-
दयोऽप्युद्घेरंस्तानिति सचूलान्येवाध्येयानि ॥

प्र० ७९९-ननु नग्नाटै प्रतिष्ठिता प्रतिमा कथं दर्शनीया पूजनीयाश्च स्यु ? तेषामन्ययूथिकत्वाभावादिति चेत्।

उ०-सत्यं, नग्नाटास्तावत्सर्वविसंवादिन, अत एव न त्रैराशिकवत्तेषामपि सम्भोगपरिहारकायोत्सर्गादि, किञ्च-यथा ह्यन्यतीर्थीया अर्हद्बिम्बानि स्वकीकुर्वाणा स्त्रीशस्त्रादिसाधनान्य वीतरागदशार्हाणी सन्निधापयन्ति, पूजाविधानं च लोकोत्तरं सदपि विपर्यासयन्ति, तथा नग्नाटा अपि प्रत्यक्षदृश्यमान-पुरुषचिह्नाण्डयुगल त्वक्समानवर्णचक्षुष्कं कुर्वन्तश्छन्नचिह्नाण्डा-तिशय त्वगन्यवर्णचक्षु स्वभावं च विपर्यासयन्ति, पूजनविधान-मप्युत्सार्य गन्धमाल्यालङ्कारादिक विपर्यासयन्त्येव, ततस्तै स्वतन्त्रतया गृहीतान्यर्हद्बिम्बान्यन्यतीर्थिकस्वतन्त्रपरिगृहीतार्ह-द्बिम्बवन्न दर्शनीयानि पूजनीयानि चेति, अत एव रैवताचलादिषु तै सह तीर्थस्वामित्वविवाद इति ॥

प्र० ८००-ननु द्रव्यलिङ्गिद्रव्यकारितानामर्हद्बिम्बानां कथं
न दर्शनादे कल्पनीयतेति ? चेत्।
उ०-भावस्तवलोपका द्रव्यलिङ्गिनस्तल्लोपेनैव द्रव्योपार्जनात्तद्र-
व्यबिम्बादीनां वन्दनीयत्वादौ भावस्तवलोपानुमत्यापत्ते गृहस्थ-
कारितेषु तेषु तत्सापेक्षत्वादेवाधिकारितत्वादेरपेक्षा यत इति ॥

प्र० ८०१-ननु गृहस्थप्रतिष्ठितानि भगवदर्हद्बिम्बानि कथं न वन्दनीयानि भवन्ति ?, यतो न परतीर्थिककुदेवचिह्नाङ्कितानि न च भावस्तवलोपानुमोदनावन्तीति चेत् ॥

उ०-सत्यं, श्रीहरिभद्रसूर्यादिभि शासनधुरन्धरै प्रदर्शितेन विधिना विपरीतानीति न वन्द्यन्ते, अविध्यनुष्ठाने कृतिवदनु-मोदनस्यापि तीव्रदोषरूपत्वात् ॥

प्र० ८०२-ननु सातिशयश्रीकेशरीयाजी-मल्लीनाथ-शान्ति-नाथ-सुमतिनाथादितीर्थादीनां सविशेषा सपर्या किं मिथ्यात्वहे-तुकीति ? चेत्।

उ०-सातिशयानां प्रतिमादीनां सपर्याविशेष सम्यक्त्व-लाभादिहेतु, अत एव भावितचैत्यान्याश्रित्यालोचनाष्टमकर-णादिषु शास्त्राज्ञा, परमैहलौकिकफलेप्सुभिस्तत्करणे जीवारित-

प्र० ८०६-ननु य स्वयकारितायां गुरुकारितायां विशिष्टविधिकारितायाश्च प्रतिमाया दर्शनेन भावस्योल्लास आह्लादश्च भवति स किं योग्य ? इति चेत् ।

उ०-सत्यं, यथा स्वयं विहित किञ्चिदपि धर्म विशेषेणानुमोदनीयतया विशेपफल यच्छति तथा स्वयंकृतायाः कारिताया वा प्रतिष्ठाया प्रतिमायाश्च दर्शनादिना विशेषेण भावस्य प्रभव आह्लादस्य च, स योग्य एव, अत एव भगवान् श्रीहरिभद्रसूरिर्विंशतिकायां-'सयकारियाइ केईति पाओ काराविय-स्से'त्यनेन प्रायोग्रहणात्स्वय कृतस्य क्रीतस्येति वचनाच्चेति स्वकृताया मुख्यत्वमाह, गुरुकारितायाश्चापि तथाभवनं नानुपयोगि, तत एव 'ज्ञेयमिदं वंशतरकांड'मितिषोडशके, तथा यद्यपि सर्वमपि धर्मानुष्ठान विधिगतमेवोपकारकमात्मन अविधिपरिहारपरायणस्य तथापि सविशेषविधिकारिताया तस्या देवादिसाधिष्ठानसम्भवात् स्यादेव विशिष्टभावोल्लासाह्लादयोर्हेतुत्वमिति, ततो यथा प्रतिमानां स्वर्णरत्नादिमयत्वे भावोल्लासाह्लादयोः तदसाधारणकारणत्वाभावेऽपि जायन्त एव तथात्रापि तथाभावेऽपि तस्यास्तद्धेतुता, अनुभवसिद्ध चैतत्, मुग्धतानिरासस्तु'जे परिस्सवा आसवा' इति पारमर्षवचनपानपीनानां सर्वत्राप्यनुगत एवेति ॥

प्र० ८०७-ननु अन्यगच्छगता अन्यसामाचारीसमाचरणपरा अन्यसम्भोगिका आचार्यादयो यदा न वन्द्यन्ते तदा तत्कृता प्रतिष्ठा प्रतिमाश्च स्थापिता कथ मन्यन्ते ? इति चेत् ।

उ०-सत्य, जिनप्रतिमावन्दनाधिकारे अन्यतीर्थिकगृहीतानां चैत्यानां वन्दनादीनां निषेधात् प्रतिमा प्रतिष्ठाश्चान्यतीर्थिकपरिग्रहरहिता मान्यन्ते साधूनपेक्ष्यासमनोज्ञानामसम्भोगिकानां चवन्दनानिषेध स्पष्ट एव ॥

प्र० ८०८-ननु भगवन्तो जिनेश्वरा प्रतिबुद्धान् गणभृदादीन् प्रव्राजयन्ति यदा किं सामायिकसूत्रेणान्येन वा केनचित्सूत्रेण प्रव्राजयन्ति ? यदि च सामायिकसूत्रेण तर्हि तत्तीर्थकराणां सूत्रापेक्षयाऽप्यात्मागम कथ न स्यात् ? कथं न स्याच्च गणभृतां परम्परागम इति चेत् ।

उ०-सत्य, सामायिकसूत्रेण प्रव्राजयन्ति, परं आचाराङ्गादिदृष्टिवादान्तद्वादशाङ्गीगणिपिटकापेक्षयैव जिनानामर्थापेक्षयाऽऽत्मागमत्वं, प्रव्राजनशिक्षणादि जिननामोदयजमिति तत्तत्प्र-

तिकारिसूत्रापेक्षया भगवतामात्मागमापेक्षयाऽपि न हानिः, आवश्यकक्रम शेषावश्यकसूत्ररचना च गणभृत्कृतैव अत एव तत्र 'वंदामि खमासमणो' इत्यादि कथन सङ्गच्छते नवरं सामायिकसूत्रे भदन्तशब्दस्य तदोच्चारोऽनुवादरूप, अत एव करोमीत्यादि न तु कारयामीत्यादि पाठ इति ॥

प्र० ८०९ ननु पञ्चचत्वारिंशत्यागमानामावश्यकनिर्युक्तिपिण्डनिर्युक्तीनामर्थरूपागमानां कथं गणना क्रियते? श्रुतकेवलिरचितत्वेन चेत् 'सुय गणहररइय'मित्यादिगाथावचनात् न्यत्र तासां, दशवैकालिकादिनिर्युक्तीनां तर्हि कथं नागममूलत्वमिति? चेत्।

उ०–सत्यं, प्रथम तावत् गणधरश्रुतकेवल्यादिप्रणीतत्वमात्रेण न सूत्रत्वं बहूनां स्तोत्रादीनां तैः प्रणीतानामपि सूत्रत्वाभावात् तथा च गणधरादिभिः प्रणीतं सूत्रमेवेति न समता व्याप्ति किन्तु सूत्र गणधरादिभिः प्रणीतमेव एवं च या रचना तैः सूत्रत्वबुद्ध्या विधीयते ता एव सूत्रसंज्ञामनुसरन्ति मान्या इति ओघनिर्युक्तिपिण्डनिर्युक्ती तु सूत्रस्पर्शरहिते आवश्यकनिर्युक्तिमध्येऽपि सूत्राणि सूत्रं पदं सूत्रस्पर्शात् प्रागेवोद्देशे निर्देशे ऐरावणपाठस्य स्वयमेवात्थापितद्वारकत्वादस्य स्वत न्त्र्याव्याख्येति तासिरवोनिर्युक्तस्य सूत्रतया रचिता गण्यन्तेऽपि च, तथैव स्वतन्त्रव्याख्येयव्याख्यानात्मकत्वात् सुविहितानां सुविहितत्वायावश्यकमध्येपत्वात्पञ्चचत्वारिंशत्यागमेषु गणना, अन्यस्यो प्रयारका स्वतन्त्रतया गण्यतेऽपरा च सूत्राङ्गतया यतश्च त्वाचा पेनिविशेषेण मानमिति ॥

प्र० ८१०–ननु आगमानां पञ्चचत्वारिंशदिति संख्याने किं हेतुक? श्रीवर्धमानशासने चतुर्दशसाहस्री यत् प्रकीर्णकानीति चेत्।

उ०–योगोद्वहनेन सहैवाध्ययनमेषामिति विवक्षयाऽऽगमसंज्ञा पञ्चचत्वारिंशत एव च सेति ज्ञायते सूत्राणि चतुरशीतिरिति सूत्रेषु तावतां नामनिरुक्तिकीर्तनात्कथ्यते इति ज्ञायते ॥

प्र० ८११–ननु आगमानां कथं श्रमणैरेवाध्ययनमिति? चेत्।

उ०–आद्यौ साध्वाचारयोरेव मुख्यवृत्त्या व्याख्यानात्, श्रमणानामपि यत् पर्यायोयोगोद्वहनादिविधिनैवानुज्ञायमानत्वात्, तस्मात्तु 'सव्वाओ-पाणाइवायाओ वेरमणं' इत्यादि 'पढमे भंते महव्वए' इत्यादि 'मिच्छा मि' इत्यादि- भिव सर्व मृतं समारम्भेऽत्यादेश्चास्यविधिप्रपाठानां श्रमणानामेवोच्चारणार्हत्वात् अन्येषां तु पुनरस्तु पूर्वत

त्वनप्राय इति, आवश्यकदशवैकालिकाचाराङ्गाध्ययनानन्तरमेव च शेषाणां सूत्राणामध्ययनस्य तत्तत्पूर्ववर्त्यतिदेशानां दर्शनारक्कमप्राप्याध्ययनत्वमिति, अत एव सामायिकसूत्रस्य प्रव्रज्याया अनन्तर तद्दानदिन एवोच्यते, यच्च श्रमणोपासकानामुत्कृष्टं षड्जीवनिकायाध्ययनान्तं श्रुतं तदेकादशीप्रपन्नानां श्रमणभूतत्वाद्योग्यमेव तत्तेषां, त्रिविधत्रिविधेन सावद्यवर्जनाधिकारोऽस्त्येव तेषाम् ॥

प्र० ८१२-ननु सूर्योदयादीनां लोकानुभावात् स्वकर्मोदयप्रभवत्वाच्च जगज्जन्तुधर्मप्रभावजन्यता कथमुपदिश्यते ? एवमभ्युपगमे च परत्र कर्मसंक्रमादिदोष लोकानुभावव्याघातश्च कथं नेति ? चेत्।

उ०-सत्यं, तेषां लोकानुभावस्वकर्मोदयानुसारिण्यां प्रवृत्तौ सत्यामपि जगज्जन्तूनां तत सुखानुभव' स्वशुभकर्ममाहात्म्यादेव, यथा दाता दानान्तरायविलयादेव दयाद्दान परं लब्धारस्तदैव लभन्ते यदा तेषां लाभान्तरायविलयो भवेत्, प्रत्यात्मानमाश्रित्य कर्मणां तत्फलानां च पार्थक्यात् दु खसाधनेषु जाग्रत्स्वन्यथा सुखानुभवस्तु तद्भोक्तृजीवकर्मोदयापेक्ष एवेति ॥

प्र० ८१३-ननु अहोरात्रे सन्ध्यानां चतुष्ट्यभावे किमिति सन्ध्यात्रयमेवौघेन जिनपूजाया काल आदिष्ट ? इति चेत्।

उ०-सत्य,-मध्यरात्रसन्ध्याया निद्राकालत्वान्न सा तदर्हतया निर्दिष्टा, मुनीनामपि प्रहरद्वयं रजन्यां स्वाप इत्युक्तेर्निद्राकाल इति ॥

प्र० ८१४-ननु सर्वकालपूज्यानां भगवतां जिनेश्वराणां (कथ) त्रिसन्ध्यमेव पूजाकाल कथ्यते ? इति चेत् ॥

उ०--धृत्तिक्रियया सामान्येन त्रिसन्ध्यस्याविरोधात्, अत एवौघेन सन्ध्यात्रयमुक्त्वा 'वित्तिकिरियाऽविरुद्धो अहवा जो जस्स जावइओ'त्ति वचनेन विशेषेण वृत्तिक्रिययाऽविरोधिनं सर्वमनियत च पूजाया कालमाचक्षिरे श्रीहरिभद्राचार्या, ओघेन त्रिसन्ध्यं पूजाया आदेशस्तु गृहिणां द्रव्यस्तव पुष्पमुख्यकः, पुष्पाणि च म्लानीभवन्ति निर्माल्यतां व्रजेयुरिति सद्यस्कपुष्पार्थमोघेन त्रिसन्ध्यं पूजाकाल ॥

प्र० ८१५-ननु स्वयंबुद्धानामाचार्यमनुपसंपन्नानां केवल स्याद्वा न वा ? स्याच्चेत् पारम्पर्य स्वतन्त्रं स्यान्न वा ? उपसम्पत्तौ चेत् केवल 'कथ ते न बुद्धबोधितसिद्धा. ? इतरथा चेत्तीर्थपारम्पर्यं कथमिति ? चेत्।

उ० – द्विविधा स्वयम्बुद्धास्तत्र तीर्थकरव्यतिरिक्तास्ते स्वयंबुध्यन्ते परमर्षोकेवलमन्यत्रार्थ प्रतिपद्यन्त एव, प्रत्येक बोधापेक्षया स्वयम्बुद्धसिद्धता ॥

प्र० ८१६–ननु सम्यक्त्वस्य लाभे श्रुतज्ञानं श्रुतज्ञानतया परिणमतीति सिद्धान्त, एवं भाष्याद्वरुपस्य सम्यक्त्वलाभाप्राप्तिरिति चेत् ।

उ० – सम्यक्त्वप्राप्तिस्थितेरधिकायां स्थितौ संख्याते सागरोपमैः श्रुतसामायिकस्य लाभ सम्यग्ज्ञानता तु प्राप्तौ सद्भ्येति ॥

प्र० ८१७–ननु कथा माध्याऽनुयोग इति ? चेत् ।

उ०–जिनागमप्रमाणप्रमेयतत्त्वाभिर्धेयमागमि सर्वस्वेयमागमिवां वचनानुयोगे वचनानुवृत्तेरिति ॥

प्र० ८१८–ननु भावकविभावकव्यवस्थितस्तत्र के परमा ? इति चेत् ।

उ०–चतुर्दशपूर्वधरो जघन्यतः भावक उत्कृष्ट, स पुनरानन्तगुणसूत्रार्थधरो विभावक उत्कृष्ट, उत्कृष्टव्यतिकर केवली ॥

प्र० ८१९–ननु जघन्यो व्यतिकर क इति चेत् ।

उ० – अनुयोगानां परिपाटीनां अर्थं सत्तक वा श्रुतवान् गृहीतवान्, जघन्यभावकविभावको स्वेच्छपरिपाटीमन्ताविति ॥

प्र० ८२०–ननु गणधराचार्योपाध्यायसाधुश्चक्रिकेशवमहामाण्डलिकमाण्डलिकयुग्मजन्मानां भावा कर्मोदयजा अपि कथं कर्मप्रकृतिषु तेषां प्रकृतया नाक्ता ? इति चेत् ।

उ०–सत्यं, जिननाम यथा निजस्य गुणस्थानमाहात्म्यता उपशमक्षयोपशमोदीरणामाणनिर्जराके परकरकरणाविरक्तया स्यान्न तथेमे भावा इति गुणस्थानाविरत्वमपि नेति च, उपशमस्य प्राधान्यमात्रं तु सम्मतान्येव तत्र तथेति ॥

प्र० ८२१–ननु भगवता प्रथमभमुत्पन्नस्य केवले कार्तपर्यायां पुरं आविष्यात्यामि विषये भावकपर्षदि च कथं श्रेयांसा एव अस्ता न भरतान्य इति ? चेत् ।

उ०–सत्य, पर्षदामप्रकस्याये शक्रादिदेवदेवीकायानां प्रयाणमासिम, भरतान्त यद्यपि वर्धमानावक परं श्रेयांसस्य तीर्थधर्मप्रवृत्त्यादिभूतत्वादधर्मप्रवर्तकत्वाम्मुख्योक्तेति ॥

प्र० ८२२–ननु चक्रिप्रभृतीनां यानि चक्रादीनि रत्नानि तेषां विशेषनामानि स्युर्नवेति चेत् ॥

उ०—स्युरेव, यथा भरतस्य चक्रस्य सुदर्शन अश्वरत्नस्य-कमलामेल अश्वरथस्य पृथ्वीविजयलाभ इति नामेति ॥

प्र० ८२३—ननु यदा मरीचिना पारिव्रज्यमादृतं तदा तेन सर्वाणि महाव्रतानि त्यक्तानि? इति चेत् ॥

उ०—एकस्मिन् गते पश्चापि गच्छन्ति महाव्रतानि, अत एव च श्रावकव्रतानामणुशब्दविशेषणेऽप्यत्र महदितिविशेषण-मितिसिद्धान्तेन त्यक्तानि स्नानस्याङ्गीकारात्, व्यवहारवृत्त्या तु तानि पालयत्येव स इति ॥

प्र० ८२४—ननु कपिलाय मरीचिना 'इत्थपि इहयंपि'त्युक्तं तस्य कोऽर्थ इति? चेत्।

उ०—यथा श्रीभगवत्यां 'इत्थंपि गमणिज्ज इहयंपि गमणिज्ज'मितिवाक्ये इत्थंशब्देन जिनोऽभिप्रेत', इहशब्देन चात्मा, तद्वदत्रापीत्थशब्देनार्हतं शासनं, इहयंशब्देन च पारिव्राज्यमिति, स्वमतस्थ कुत्सिततादर्शनायैव च तदर्थकः क उपात्त, तथा जैनशासनस्य सम्पूर्णधर्माश्रयत्वेन यथा श्रेयस्त्वं तथैव मम धर्मस्याल्पधर्मत्वात्कुत्सितत्वमिति श्रीमलयगिरिभिरावश्यकवृत्तौ पूर्णाल्पोपलक्षिततया कृतमप्यस्ति तत्पदव्याख्यानं, चूर्णिकारा अपि'एतेसु अत्थि इहवि मणाग'मित्याहुः, दुर्भावितता च जैन-शासनोत्तीर्णे पारिव्राज्ये धर्मबुद्धेरापादनात्, अत एव 'एएण दुब्भासिएण संसारो अणेण वड्ढिओ कुधम्मं वड्ढंतेणे'ति प्रोचुश्चूर्णिकाराः ॥

प्र० ८२५—ननु भगवतो महावीरस्याप्रतिपतितं ज्ञानत्रयं, तत्र मतिज्ञानस्य मानाय जातिस्मरणस्योक्तत्वात् सज्ञिपूर्वभवानां ज्ञान ज्ञायते मतौ, अवधौ च दशमाद्देवलोकादागमनात् तत्रत्य-मानो ज्ञायते परं श्रुतं किमानमिति? चेत्।

उ०—श्रीऋषभदेवस्य पूर्वभवे चतुर्दशपूर्वित्वाच्चतुर्दश पूर्वाणि छाद्मस्थ्ये, शेषाणां त्वेकादशाङ्गित्वाच्छ्रमणस्य भगवतो महावीरस्य एकादशाङ्गित्वं छाद्मस्थ्ये, परं शालिशीर्षे भगवतो लोकावधि-रुत्पन्न इत्याकेवलाल्लोकावधिमान् भगवान् महावीर इति ॥

प्र० ८२६—ननु श्रमणस्य भगवतो महावीरस्य छाद्मस्थ्यं यावद्विशालायां चेटकस्य महाराजस्य सद्भावात्कथ तत्र शङ्खो गणराज? इति चेत्।

उ०—तत्रागत्य तदा तस्यावस्थानात् यद्वा चेटकस्याष्टा-दशानां गणराजानामधीशत्वात् स तत्रत्यो गणराज इति ॥

उ०-सत्य, गुणगृह्यमेव जिनशासनं, तेन गुणवतीनां स्त्रीणां मोक्षो मान्यते, साध्वीनां च ज्येष्ठकल्पोऽस्त्येव, तासामप्युपस्थापनातो दीक्षापर्यायस्य गणनात् परं स स्वपक्षे एव परपक्षे तु तदङ्गीकारे साध्वीनां समग्रा चर्याऽवलोकनीया स्यात् साधुभि, तदवलोकनं तु सर्वेषां दूरे परमाचार्योपाध्यायैस्तासां परिवर्त्तनमपि दुष्करतमं अल्पे एव च तद्योग्या, अत एव तादृशस्यापरस्याभावे योग्यस्य न तत्परिवर्त्तकस्य जिनकल्पीया प्रवृत्तिरनुज्ञायते, तीर्थकरगणधराणां पुरुषत्वनियमात् पुरुषज्येष्ठत्ववद्विपरीतनियमस्तु 'नैव कर्त्तुं शक्य, अन्यान्यप्यनेकानि तथाऽत्वे कारणानि सन्तीति चिरदीक्षिताभिरपि ताभि' साधुरेव वन्द्य इति, एव च युक्ता व्रतकल्पाद्भिन्नता ज्येष्ठकल्पस्य ॥

प्र० ८३३-ननु परिहारविशुद्धिका अष्टादशसागरस्थितिकेषूत्कृष्टतो जायन्ते, तत्कथ? श्रावकाणामुत्कृष्टतो द्वाविंशतिसागरस्थितिषूत्पादादिति चेत्।

उ०-सत्यं, ते हि कषायकुशीला एव, कषायाणां च तथा तेषां परिणतेस्तथोत्पाद, सप्रायश्चित्तपरिहारतपस्विचारित्रमाश्रित्य वा तथेति ॥

प्र० ८३४-ननु ऊढप्रतिमस्य श्रावकस्य श्रमणत्वमनशनित्व वेति द्वयमेव स्याद् गृहस्थत्वेऽपि वा तिष्ठेत्? श्रीआवश्यकवृत्तावाराद्धगृहस्थधर्म' प्रव्रजेत् सलेखनां वा कुर्यादिति सामाचार्या उल्लेखादिति चेत्।

उ०-'अहवा गिहत्थभाव उचियत्तं अप्पणो णाउ'मिति पञ्चाशकोक्तेर्गृहस्थत्वेऽपि तिष्ठेत् या चावश्यके सामाचार्या उक्ति सा सलेखनया तासां सम्बन्धदर्शनार्थमात्रमेव न तु नियमायेति॥

प्र० ८३५-ननु श्रीजिनेश्वराद्यां यं कायोत्सर्गं कुर्वन्ति, ज्ञानाद्याराधनदु:खकर्मक्षयार्थं ये क्रियन्ते, कायोत्सर्गप्रतिमायां च ये प्रतिपन्नपञ्चमश्राद्धप्रतिमा श्राद्धा कुर्वन्ति ते सर्वे कायोत्सर्गस्य कस्मिन्नन्तर्भवन्ति भेदे? इति चेत्॥

उ०-द्विविधे कायोत्सर्गे यो जीवितनिरपेक्ष क्रियते सोऽभिभवोत्सर्गो, शेषास्तु सर्वेऽपि चेष्टाकायोत्सर्गेऽन्तर्भवन्ति, तेषां चेष्टानिरोधनाय निवर्त्तनात्। न च वाच्यं चेष्टाकायोत्सर्गस्य 'सायसयमित्यादिना 'गमणागमणविहारे' इत्यादिना च मानं निर्दिष्टमिमे तु गतमाना इति, प्रायश्चित्तरूपस्यैव तस्य तत्र माननिर्देशात् चैत्यवन्दनायाश्च नियतत्वात्तदुत्सर्गस्योप-

सावद्यस्य निन्दनादि कायोत्सर्गावस्थानं गुर्वाशातनानिन्दादि च क्रियते इति चेत्।

उ० – सावद्यपरिहारानवद्याङ्गीकाररूप सामायिक स्थानमौनध्यानव्यतिरिक्तव्यापारत्यागरूपकायोत्सर्गेणोत्तरीकरणादि गुर्वाशातनात्यागश्च तेषामेव यथार्थं ये आत्मप्रतिबन्ध व्युत्सृत्य तत्तत्क्रियायामुद्यच्छन्तीति आत्मौद्धत्यपरिहारस्य व्याप्तिदर्शनायात्मोत्सर्गविषय सर्वत्रेति॥

प्र० ८४०–नन्वात्मना ये कर्मपुद्गला गृह्यन्ते तेषां सघातन कथ स्यादिति? चेत्।

उ०–गृहीतास्ते तेज शरीरसहगतेनात्मनेति गृहीता सन्तस्तैजसेनोष्णीभूयात्मना सम्बन्धमुपयांति, एवं च सघातसम्बन्धयो प्रार्थक्य स्पष्ट भवति, परमय तैजससम्बन्ध साधनरूप, साध्यस्तु तत्तद्बन्ध ॥

प्र० ८४१–ननु चरन्ती दिग ये कथ्यते तेषु पूर्वधरा कीदृशा ग्राह्या? इति चेत्।

उ०–एकपूर्व्यधिष्ठितापि दिक् तथा॥

प्र० ८४२–ननु सर्वभव्या सेत्स्यन्तीत्यत्रादेशसर्वं निरवशेषसर्वं वा ग्राह्यमिति? चेत्।

उ०–संसारस्य भव्यशून्यत्वाभावादादेशसर्वं ग्राह्य, ततश्च ये व्यवहारराशिमागतास्ते सर्वेऽपि सेत्स्यन्त्येव, अत एव विशेषणवत्यां 'जेहिं न पत्तो तसाइपरिणामो'त्ति, 'एंति अणाइवणस्सइमज्झाओ त्ति 'निगोयवासं अणुहवंति'त्ति पृथक् पृथगुक्तमिति॥

प्र० ८४३–ननु भगवान् जिनेश्वर. स्वयसंबुद्धत्वात्सामायिक कुर्वन् 'भंते'त्ति न वदति, तथाऽन्योऽपि जातिस्मरणादिना बुद्धश्चेद् 'भंते'त्ति कथयेन्नवेति? चेद्॥

उ०–जिनेश्वरो हि तथाकल्पत्वात् अन्यानायत्तत्वाद्'भंते'त्ति न वदति, जातिस्मृतिमानन्यस्तु 'भंते'त्ति पूर्वाचार्यमामन्त्रयेत्, एव चातीर्थकराणां न सामायिकसूत्रोच्चार स्वाच्छन्द्येन स्यात्, अत एव च पुण्डरीकाद्या स्वयं स्वीकृत्यापि सामायिकं पार्श्वे स्थविराणां तत्स्वीचक्रुरिति॥

प्र० ८४५–ननु करोमि प्रत्याख्यामीत्यनेनानवद्यासेवनसावद्यनिषेधकारक आत्मा मनसा वाचा कायेन चेति करणान्यपि तत्परिणतिरूपाणि करणकारणानुमतिरूपा योगास्तत्प्रवृत्तिरूपा

प्र० ८५०–ननु मातापित्राद्य प्राक् प्रव्रजितं पुत्रादिकं वन्दन्ते न वेति ? चेत् ।

उ०–श्राद्धत्वे स्थिता वन्दन्त एव, प्रव्रजिता अपि धर्मनाशभीता यदि वन्दनामनुज्ञापयन्ति तर्हि न निषेध्या पुत्रादिभि साधुभिरसयतानां तेषा वन्दनं तु दूरापास्तमेव, पुत्राणामाचार्यादित्वे गच्छीयै साधुभिरज्ञाता अपि प्रव्रजितास्ते गुरुसन्देशात् प्रत्याख्यानग्रहेषु आदरणीया जात्ववमा अपि ॥

प्र० ८५१–ननु सप्तसु नयेषु के ज्ञाननया के च क्रियानया ? इति चेद् ।

उ०–आद्यास्त्रयो ज्ञाननया ऋजुसूत्राद्याश्चत्वार क्रियानया ? अत एव चाद्यानां प्रवचन मोक्षहेतु परेषां तु सयम एव सद्दुज्जुसुयाणं पुण णिव्वाण सजमो चेवे'त्युन्यते ॥

प्र० ८५२–ननु प्रमाद्यतामन्यसम्भोगिकानां नोदना कर्त्तव्या नवेति चेत् ।

उ०–यदा प्रावचनिके कार्ये प्रमाद्यन्ति तदा तेषामवश्यं नोदना कार्या, यदिवा तेषां नोदना चेदप्रीत्युत्पादिनी न स्यात्तदा सा कार्या, अन्यथा त्वनोदनैव तेषां सयम इति ॥

प्र० ८५३–ननु निह्नवत्वमादौ प्रतिपद्यमानानां जमाल्यादीनामाभिनिवेशिक मिथ्यात्वं स्यात्तत्र न कोऽपि प्रश्न परं तन्मतानुसारिणो यदि जिनोपज्ञमिदमेवेति मत्वा तन्मतमनुसरन्ति तदा मिथ्यात्वं स्यान्नवा ? स्याच्चेत् कतमदिति चेन् ।

उ०–शृणु, आदौ तावल्लभ्यमानैः सह यत्र सवदते तद्यदि मन्यते तदा जिनोपज्ञतोक्तिर्मिथ्यात्वस्य बाधिनी न श्रुत ज्ञात च सिद्धान्तमभिसधत्तुं तत्परस्य तु अपराध्यति अज्ञानमेव ये च सिद्धान्तवचनैर्विरुद्धं श्रद्दधति तदनुगतत्वेन ते मिथ्यादृष्टय एव आभिग्रहिक च तदिति ॥

प्र० ८५४–ननु देवदत्त इति सामान्यनाम यद्वा श्रेणिकादिहारादिवद्देवार्पितत्वसूचक यथा तथाऽस्ति कस्यापि विशेषाख्या सेति चेत् ।

उ०–सुलसाया परमार्हत्या ये द्वात्रिंशत्पुत्रास्तेषां सर्वेषां देवदत्तेति नाम्ना प्रसिद्धिः, शौद्धोदनेः परमद्वेषपात्र च देवदत्ताख्य एव मनुष्यः कश्चिदिति ॥

प्र० ८५५–ननु सूक्ष्मानप्राणध्यान महाप्राणध्यानस्य नामांतरं भिन्नं वा तदिति ।

उ०–न चेत् प्रतिक्रमणादि करोति तदा तदवस्थस्तीव्रानुबन्धोऽवश्यमेव भोक्तव्य कर्मणां, आलोचनादौ तु नैव तद्भोगनियमः मन्दानुभवत्वस्य तेन विधानादिति, ततश्चाव्रतिनामपि न्याय्यं प्रतिक्रमणादि ॥

प्र० ८६१–ननु मातापित्रादीनां वन्दनकारणनिषेध समस्तेषु वन्दनेषु कतिचित्सु वेति ? ।

उ०–नियतवन्दनकान्याश्रित्य स निषेध', श्रुतोद्देशालोचनादिषु तु अनियतानियततया कार्यन्ते च तानीति ॥

प्र० ८६२–ननु शक्रस्तवे भगवद्भ्य इति ग्रहणवाक्यस्य प्राक् सर्वज्ञसर्वदर्शिपदाद् भगवत्तानिबन्धनसमग्रैश्वर्यादिषट्कस्य व्याख्याया युक्तत्वे किमित्यसाधारणगुणवाचकादिसम्पत्त्वेन क्रियते व्याख्येति ? चेत् ॥

उ०–माहात्म्याख्याने भवेदेव तथा व्याख्याऽर्हा परमन्ययोगायोगव्यवच्छेदेन सम्भवद्गुणानाश्रित्य देवाधिदेवत्वस्य स्थापनाय सर्वपार्षदतयाऽसाधारणगुणस्तवादिरूपेण क्रियमाणा व्याख्या चलच्चित्तानां विशेषोपयोगिनी, अत एव च प्रतिबुद्धा सिद्धर्षयस्तस्य तथाव्याख्याया अवलोकनात् स्वयमेवाहु' सिद्धर्षय उपमितौ एवं वृत्तमिति ॥

प्र० ८६३–ननु ईर्यापथिकीक्रिया वीतरागाणामेव भवति परस्यापि वेति ? ।

उ०–वीतरागाणां कषायाभावात् साम्परायिकी न भवति इत्यैर्यापथिक्यैकैव स्यात्, अप्रमत्तानां यद्यपि कषायसद्भावादनुसमयं साम्परायिकी स्यादेव, परं यतनापरे अप्रमत्ते कषायाणामप्रभुत्वाद्योगानामेव क्रियासु प्रभुत्वादैर्यापथिक्या अस्तित्वे न विरोध, तत्र साम्परायिकबन्धस्तु क्षीनकषायाणामेवेति, युगपच्च क्रियाद्वयमिति भिन्नबन्धापेक्ष ग्राह्यम् ॥

प्र० ८६४–ननु अयोगिकेवलिनि योगानां निरोध', कथं ततो ध्यानमिति ? ।

उ०–एके आचार्या ऐकाग्र्यं निरोधो वेति ध्यानलक्षणे द्वयं गणयन्ति, एकवचनं त्वेकतरस्यैव भावात्, योगनिरोधोऽपि ध्यानमेव, ये तु ऐकाग्र्येण चिन्तानिरोध इति व्याख्यान्ति सयोगावस्थायामेव शुक्लमारब्धमनुवर्त्तते चायोगित्वे सूक्ष्मक्रियानिरोधफलत्वादयोगस्येति ॥

प्र० ८६५–ननु वसतिप्रमार्जने मृते च साधौ कथं न

जोग'मिति, तथा च व्रतानां सामायिकविशेषरूपत्वात् सावद्यानुवृत्ते सावद्यात्सर्वप्राणातिपातादिति ज्ञानं सुकरमेव ॥

प्र० ८७०-ननु ग्रन्थिदेशे स्थितोऽभव्य पूर्वाणामध्ययनं कुर्यान्नवेति ? कुर्याच्चेत्पूर्वधरलब्धेरभव्यानां निषेध' कथं ? न कुर्याच्चेत् किमिति 'ग्रन्थिदेशे च वर्त्तमानो भव्योऽभव्यो वा संख्येयमसंख्येयं वा कालं तिष्ठति, स च तत्रस्थितो भिन्नानि दशपूर्वाणि यावल्लभते (यावत्) भिन्नदशपूर्वान्त श्रुतं मिथ्याश्रुतमपि स्यात् मिथ्यात्विगृहीतत्वादि'त्यर्थदीपिकायां, आवश्यके च 'पूर्वधरा दशचतुर्दशपूर्वविद' इत्युक्तमिति चेत्।

उ०-सत्यं, 'अभव्वसिद्धियस्स कह? सो पक्कारस अंगाइ पढति'त्तिचूर्णिवचनात् नाभव्यानां पूर्वश्रुत न च पूर्वधरलब्धिरिति। अर्थदीपिकायां भव्याभव्यसाधारण्यात् मिथ्याश्रुतत्वे तत्त्वं, आवश्यकादौ तु पूर्वधराणां माहात्म्यार्थं दशचतुर्दशपूर्वविद इति वाक्य, न चात एव व्युत्पत्तौ तथोक्ति, दशादिपूर्वविन्तानिषेधस्तु सम्यक्त्वश्रुतत्वनियमादभिन्नदशपूर्व्यादेर्नियमसम्यक्त्वात्सिद्ध एवेति पूर्वधरलब्धेस्तथाविधत्वेन निषेधो व्यर्थ एवेति गम्यते, किञ्चैवमभिन्नदशपूर्वित्व स्त्रियामपि स्यात् न चेष्टं तत् पूर्वानधिकारादिति ॥

प्र० ८७१-ननु देशविरतेः प्रतिपद्यमानका अवधिज्ञानिन कथ न भवन्तीति ? चेत्।

उ०-अवधिमन्तो द्विविधा नियतावधय अनियतावधयश्च, तत्र नियतावधिमत्सु देवनारकाणां प्राग्जन्मबद्धोत्कृष्टपुण्यपापफलभोगास्पदत्वान्न जीवनोत्कर्षसाधनस्थिति, भगवन्तो जिनेश्वराश्च भोगक्षय्यकर्माण इति तत्क्षये सर्वविरतिमेव प्रतिपद्यन्ते न तु देशविरतिं, अनियतावधिमत्सु च क्षेयभोगकर्मत्वान्न देशविरतिमन्त'करणे ते स्थापयन्ति तथाविधज्ञानवीर्यप्राबल्यात्सर्वविरतिमेव स्वीकुर्वन्ति, प्रतिपन्नदेशविरतिकानां प्राप्तावप्यवधेः तथाविधसाधनसामग्र्यादिवियोगात् स्यादेव तथात्वमिति ॥

प्र० ८७२-ननु भगवतां जिनेश्वरादीनां सत्कारेण किं फलमिति ? चेत्।

उ०-आदौ तावद् गुणवत्पूजा कृता भवति, तेन आत्मनश्च तद्गुणप्रतिबन्धकक्षय, गुणवत्पूजाया पारम्पर्य, अमार्गप्रतिपन्ना अपि मार्गं प्रतिपद्यन्ते, यथा भगवत आदिनाथस्य शक्रादिभि'

क्रियमाण सत्कारो मरीचे मार्गप्रतिपत्तौ हेतुरिति, तत एव च चैत्ये मूलनायकस्य कल्पना तस्य विशेषपूजादि च शास्त्रकारैरादिष्टमिति ॥

प्र० ८७३ ननु नैगम कथं स्यात्गाम्यासमिच्छति कथ च न संग्राहय इति ? चेत्।

उ० – वस्तुना व्यापारस्याभावेऽपि तस्य हेतुतामिच्छति नैगम इति यथा स्थानं प्रकृष्टं सम्यक्त्वाद्या गुणास्ते स्थान मोक्षस्य हवित्वात्ययगामी स्थानं नैगमा वदति शेषास्तु तस्याः स्वय व्यापाराभावाद्धच्छन्ति, नयानयनव्यवहारे प्रत्यं वस्तुनिष्पत्तौ वस्तु च कार्यकृदिति भीन् ते इच्छन्ति, नय गुणास्तु परिणामतास्थिता इति भावनान्निन ॥

प्र० ८७४–ननु सम्यग्दर्शननमस्कारसामायिकादीनां गुणानां किमितिद्वारे प्रत्यद्वारेण जीवमुक्ता नो स्कन्धा ना ग्राम इति कथमुच्यते ? इति चेत् ।

उ०–सत्यं तथा जीवे पृथग्भूतास्थित्यादिषु सत्स्वपि सर्वेपामेते स्वरूपभूता इति समस्तजीवास्तिकायस्य स्कन्धरूपत्वे यितस्य विशेषापेक्षया च चतुर्दशभूतग्रामभेदानपेक्ष्य ना स्कन्धत्वं

नो ग्रामत्वं च नायाम्नस्य देशावाचित्वमात्रस्य कल्प्यते इति सम्माप्यते ॥

प्र० ८७५–ननु दृष्टिरागस्य किं स्वरूपं स च केषु केषां च स्यात् कथ च तस्य दुष्छेद्यतेति ? चेत्।

उ० शृणु, यो विषयसम्बन्धयोरपेक्षां विना कुदेवकुगुरुकुधर्मेषु सुदेवसुगुरुसुधर्मबुद्ध्या रागः स दृष्टिरागः, स च मिथ्यादृशां विपरीतचित्तविभ्रमपातकमिषु चतुर्थगुणस्थानेष भिन्नमिथ्योऽपि कुयुक्तिकदाग्रहाप्रसत्वात् दुच्छेद्य स इति भाष्यते ॥

प्र० ८७६ ननु यत् औपशमिके पुद्गलानां सत्तागतानां प्रदेशरसाभ्यां वेदनाभावो विशिष्यते क्षायोपशमिकात्तत्र किं सत्तागतेषु तेष्वस्ति कोऽपि विशेष इति ? चेत् ।

उ०–औपशमिके सत्तागता मिथ्यात्वपुद्गला यथावस्थामता एव क्षायोपशमिके तु ते मिश्रीभावमाप्ता तथाभूता एव च येषां यामित प्रतिपाते स मिश्रीभावोऽपि नानामेति ॥

प्र० ८७७ ननु अकृतत्रिपुञ्जस्यास्तपितमिथ्यात्वस्यौपशमिकसम्यक्त्वस्य लाभः कथ्यते, उपशमश्रेणिमारोहन् क्षायोपशमिकसम्यक्त्ववान् सर्वं सम्यक्त्वमौपशमिकमेव करोति नहि

क्षायिकसम्यक्त्व एवारोहक उपशमश्रेणे, औपशमिकस्यापि तस्य भावात्कथं च स न कृतत्रिपुञ्जादिरूप इति ? चेत्।

उ०—सत्यं, श्रेणिगतभिन्नौपशमिकस्यान्तरकरणे लभ्यस्येदं लक्षणमिति न भवदुक्तो विरोधोऽत्रेति। ननु अकृतत्रिपुञ्जस्य यदित्येव कथिते वाच्यार्थसिद्धे किमित्यक्षपितमिथ्यात्वेति विशेषणमिति चेत्। सत्य, बहुशो जीवा आदावौपशमिकमेव लभन्ते परं मरुदेवीसदृशा केऽपि तथाभव्यत्वानुभावादादावेव क्षायिकमपि लभन्ते इति तद्वारणायाक्षपितेत्यादि ॥

प्र० ८७८—ननु आवश्यकचूर्णेनन्द्यादिचूर्णीनां विधाने किं समान कालो विषमो वेति ? चेद्।

उ०—विषम, यतो भगवता श्रीजिनभद्रक्षमाश्रमणेन विशेषणवत्यां आवश्यकचूर्णिगता सामायिकचूर्णिरुल्लिखिता, तत सा प्रत्नतरा, नन्द्यादीनां चूर्णयश्च विशेषावश्यकगाथातत्कर्त्रुल्लेखवत्य इति श्रीजिनभद्रगणिक्षमाश्रमणादर्वाचीना एव ता इति सम्भावना ॥

प्र० ८७९—ननु तत्त्वार्थे ज्ञानान्यादावुक्त्वा पश्चात्तानि प्रत्यक्षपरोक्षरूपेण विभक्तानि, प्रमाणनयतत्त्वालङ्कारे च प्रमाणे

उक्त्वा तद्विभागे ज्ञानान्युक्तानि तत्कथमिति ? चेत्।

उ०—शृणु, जैनानां तावत् क्रमभावक्रमोत्पत्त्यादिभि स्पर्शनेन्द्रियावग्रहादिभेदै पञ्चानामपि ज्ञानानां क्रम प्रमाणता चेष्टा, परं लोकप्रवाहपतितानां श्रोतृणामग्रे उपक्रमादिना व्याख्याने श्रोतृगणानुकूल्येन व्याख्यानविधेर्नियतत्वात प्रत्यक्षादिभिश्चतुर्भिस्तज्ज्ञातैर्व्याख्याकरणीयेति तानि प्रदर्शनीयानि, ततश्चानियमेन विभागविधौ तत्तत्कालीन श्रोतृगणगत प्राक् सिद्धो वोध एव कारणमिति मन्यामहे ॥

प्र० ८८०—ननु 'बन्धहेत्वभावनिर्जराभ्या'मित्यत्र सकामनिर्जरेति किं नोक्त ? तद्धत एव मोक्षभावादिति चेत्।

उ०—सत्य, प्रतिपक्षदर्शनानाश्रित्यैवोपदेशात्तेषां च सकामैव सा, अत एव नाश्रवेषु मिथ्यात्वस्य निर्जरायां च भृगुपातादीनामुक्तिरिति ॥

प्र० ८८१—ननु भक्तामरस्तोत्रे अशोकवृक्षसिंहासनच्छत्रचामराण्येव कथ वर्णितानि चत्वारि, कल्याणमन्दिरस्तोत्रे भामण्डल विना सप्त प्रातिहार्याणि कथमुक्तानीति ? चेत्।

उ०—सत्यं, भक्तामरस्तोत्रं हि भगवतो जिनेश्वरविहारावस्थामाश्रित्य स्तौति अत एव तत्र 'पद्मौ पदानि तव यत्र'ति

क्रमो यो दृश्यते स सहेतुको यादृच्छिको वेति ? चेत्।

उ०-सामान्येन तावदरक्तद्विष्टव्युद्ग्राहितमूढानां योग्यता धर्मस्य श्रवणादिष्वपि, तथाविधाश्च कथञ्चित् क्षान्त्यादियोगे एव, किञ्च-आलस्याद्यास्त्रयोदश काठिका धर्मस्य श्रवणादिषु विघ्नकरा मतास्तद्विघातश्च क्षान्त्यादिभिरेव, अन्यच्च तत्त्वार्थश्रद्धानं देवादिरत्नत्रयादृतिश्चानन्तानुबन्ध्याद्युदयनिरोधसाध्येति तन्निरोध क्षान्त्यादिभिरिति, तत्रापि प्रभूतानर्थकृद्वैरप्रसूति क्रोधात्, मैत्री च धर्मस्य सर्वभावनानां च मूलमिति क्रोधनिर्वासनरूपा क्षान्तिरादौ विनयस्यात्ममार्दवताकरणेन गुणिभ्यो नामनात्तदनु मानघातरूप मार्दव, मार्दवस्य स्वीकारेऽपि धर्मस्य यथावादी तथाकारी मायामुक्त स्यात्ततस्तदनु मायानिरोधात्मकमार्जव, सर्वत्रापि धर्मस्य प्रतिपत्तिपालनवृद्ध्यादिषु स एव निष्प्रत्यूह प्रवर्त्तक स्याद्योऽसौ लोभनिरोधीति प्रान्ते लोभनिरोधरूपाया मुक्तेर्न्यास अत एवागमेऽपि आरम्भपरिग्रहनिरोधेनैव धर्मश्रवणप्राप्त्यादि नियम्यते, एव च स्वाख्यातधर्मलिप्साधनाहत, आख्याता च जगज्जन्तुजाताभयदानपटुरेव योग्य, अत एव चाद्य गीयते महाव्रतं सर्वप्राणातिपातविरतिरिति, पर श्रोतॄणा धर्माख्यातॄणां वैविध्यात् सत्यादिश्च एव तथ्यधर्मोपलम्भ इति सत्यस्यादौ श्रोतृवक्तृगुणेषु न्यास, अङ्गीकृत्योक्तवापि सत्यं स एव तत्रावस्थाता य आत्मपावित्र्यमनारतमभिलषन्न लिप्येन तीर्थकरादत्तादिभिरिति शौचं, एवमपि सति स एव स्यान्मार्गगामी मार्गदाता च य इन्द्रियरोधादिरूपे सप्तदशविधे सयमे रतः ततस्तप, एवविधोऽपि स एव भवेन् मार्गे स्थिरो य क्षुदादिसहिष्णुस्ततस्तपः, सर्वेषामेषां धर्माणां प्राप्त्यादि सुगुरुपादारविंदमासेवमानानामेवेति ब्रह्मचर्यं गुरुकुलवासश्चैकोऽहं नास्ति मे कश्चिज्जगतीति भावनावतामेवेति प्रान्त्ये आकिञ्चन्यस्योपन्यास इत्येव सहेतुक क्रम संभाव्यते क्षान्त्यादीनां धर्माणामिति, गौणप्रधानन्यायेन तु संयमादिकः स स्यादिति ॥

प्र० ८८९-ननु जिनेश्वरप्रभो स्वयंकारिताया गुरुकारिताया विशिष्टविधिकारितायां वा प्रतिमाया पूजने फलविशेषोऽस्ति न वेति ? चेत् ।

उ०-तथा तथा हेतोस्तेषां श्राद्धानां तथा तथा भाववृद्धिर्भवतीति सर्वेऽप्येते पक्षा मान्या एव, अत एव 'ज्ञेयमिदं वशातरकाण्ड'मिति षोडशके, 'विहिणा उ कीरमाणे'त्यादि पूजापञ्चाशकादाविति, तत्र बहुमानस्य योग्यत्वेऽपीतरत्रावज्ञा तु भवभ्रमणवल्लरीकन्दोपमैवेति न पर प्रतिष्ठाभेदस्तत , अन्यत्रापि

दिति सहायेत्थंभूतलक्षणा तृतीयाऽत्र, हेतुकरणयोस्तृतीयाकरणे तु 'वेयणे'त्यादिक गौणतामापद्येत, मुख्यं च तदेव, अत एव वैयावृत्त्यादिके आवश्यके कारणे अप्राप्तातीतयोरपि निष्क्रमणे बाधा नेति। ननु तत एव शेषाणां प्रतिलेखनादिक्रियाणां सप्तमी कृताऽधिकरणे, तत्र नैमित्तिक, तत एव तत्राकालवर्जनस्य 'अकाल च विवज्जित्ते'ति विधीयते विध्यर्थे एव निषेध, तथा प्रतिलेखनादिषु तत्कालो निमित्त तथा तद्कालो बाधकः, एवं च तासां कालेऽकरणवत् अकाले करणस्यापि प्रायश्चित्तस्थानता शेषक्रियार्थत्वाच्चोत्तरार्धे 'काले काल'मिति स्वतन्त्रमुच्यते भिक्षार्थनिष्क्रमप्रवेशयोरेवोक्तत्वात्, एवमपि भिक्षाकाल एव वर्ण्य तेन तु भोजनकाल तस्य त्वासूर्यं सम्भवात् ॥

प्र० ८९५–ननु कथं जिनकल्पिका इति ? चेत्।

उ०–पाणिपतद्ग्रहत्वे द्वयानां साम्य, अन्यथा जिना कल्पातीता, जिनकल्पिका सरजोहरणाद्युपधय इति स्वसामाचारीस्थाश्चेति ॥

प्र० ८९६–ननु बन्धहेत्वभावनिर्जराभ्यामित्यात्राश्रवाभाव कथ नोक्त, यतोऽयोगितायां सर्वसंवरेण योगाश्रवनिरोध एव मोक्षो नान्यथा किञ्च–आश्रवाभावे एव बन्धाभावो नियत इति चेत्।

उ०–सत्य, वीतरागाणां बन्धकाल एवाश्रवकाल· सामयिकत्वाद्बन्धस्यैपामिति फलभूतबन्धाभावकथनाद् आश्रवाभावो नोक्त, किञ्च–न ह्याश्रवत आत्मगुणानामावरणं किन्तु बन्धेनोदयद्वारैव तत्क्षय एव च स्वरूपावस्थानमात्मन इति बन्धाभाव उक्त ॥

प्र० ८९७–ननु जीवानां ज्ञानदर्शनचारित्रसुखवीर्यस्वभावत्वे किमिति ज्ञानदर्शनरूपोपयोगलक्षणता 'उपयोगो लक्षण'मिति 'चेतन आत्मे'ति च कथ्यते इति ? चेत्।

उ०–संसारिणां तेषामतिप्रचुराणि लक्षणानि श्रीदशवैकालिकनिर्युक्त्यन्तर्गतभाष्यगाथाभिर्विवृत्य दर्शितानि परप्रवादिनामनभ्युपगतात्मानां सुखेन तेषात्मसत्ताया प्रतिपादनभावात्, परं न तानि जीवस्वरूपाणि, ज्ञानादीनि तु पञ्च जीवस्वरूपाणि, अतः कृत्स्नकर्ममुक्तेषु सिद्धभगवत्स्वपि तानि भवन्ति तथापि चारित्रादीनि ज्ञानदर्शनसहचारितात्मलाभलब्धानि, ज्ञानदर्शने तु स्वतन्त्रे इति ते एव लक्षणमुक्तम् ॥

प्र० ८९८–ननु नवानां तत्त्वानां चतुर्दशादिषु भेदेषु

प्र० ९०१–ननु अर्हन्त सिद्धाश्च निर्विवाद देवतत्त्वतयाऽभिमान्या पर गुरुतत्त्वतया तेऽभिमन्यन्ते न वेति ? चेत् ।

उ० – सिद्धानां भगवता गृह्यन्यलिङ्गितयाऽपि सेधनान्माभूतपूर्वप्रज्ञापनाप्रधाननयेन गुरुत्वनियम, स्वलिङ्गसिद्धानामपि मूककेवल्यादीना न स्यादुपदेशकत्वाभावादपि शास्त्रोपदेशकत्वगुणा गुरुता, परं भगवतामर्हतां तु स्वलिङ्गसिद्धत्वनियमादस्ति साधुत्वरूपा गुरुता द्वादशाङ्गार्थप्रणायकत्वाच्च शास्त्रार्थनिगरणरूपापि गुरुता, अत एव भगवता गौतमेन भगवन्त महावीरमुद्दिश्य 'मम धम्मायरिएणे'ति स्कन्दकपरिव्राजकायोक्त, हालिकाय च 'तव मम च गुरवो भगवन्तो महावीरा' इति, गोशालकेनापि आनन्दानगाराय 'तव धम्मायरिएणे'त्यादि श्रमणं भगवन्त महावीरमुद्दिश्योक्तमिति, तत एव च स्थविरावलौ प्रथममेव 'समणे भगव महावीरे'त्ति ॥

प्र० ९०२–ननु 'समणे भगवं महावीरे'त्ति नाम पद वा पदानि वेति, यत 'देवेहिं से नामं कए समण भगवं महावीरे'त्ति नाम, अत एव ख्यात्यर्थेनेतिना समासे 'इह खलु समणे भगवं महावीरे'त्ति, कीर्तिवर्णशब्दश्लोकाविष्करणे पदं च 'तेणं कालेणं समणे० भगवं महावीरे पंचहत्थुत्तरे होत्थ'त्ति वचनात्, नह्यत्र विशेषणविशेष्यभाव समुच्चयो वा, पदानि च 'समणस्स णं भगवओ महावीरस्स तिन्नि नामधेज्जे'त्युच्यते इति चेत् ।

उ०–समुदायार्थेन नाम. पृथक्पृथगर्थविवक्षयाऽन्वयाद्येकत्र पदं, अवयवार्थपार्थक्यमपेक्ष्य पदानीति गम्यते इति सत्यं नात्र त्रिष्वप्युपेक्षणीयमेकमपि ॥

प्र० ९०३–ननु तापसानां व्याख्याप्रज्ञप्त्यादिपूत्कृष्टो ज्योतिष्केषूत्पादोऽभिहितो बालतपस्वी तामलिश्चेशानेन्द्रतयोत्पन्नस्तत्कथमिति ? चेत् ।

उ० – प्रथम तावत् औपपातिकविवृतास्तापसभेदा परे, न तत्र प्राणामाप्रव्रज्या तामिलिनाचीर्णा, परं च यत्तेनासुरनिकायदेवदेवीसमुदायेनैकत्रीभूय स्वेन्द्रतानिदानकरणाय प्रेरितोऽपि न चकार निदानं, तत्र हेतुर्जिनवचनकृतो निदाननिषेध एव, प्राप्त च तत्र तेन सम्यक्त्व, तत एव चोत्पन्नमात्रोऽवधिना भगवत्स्थानमागत चकार च नृत्यमतिदेशश्च तत्र सम्यग्दृश· सूर्याभस्येति न तथोत्पत्तिर्विरुद्धा तस्य ॥

उ०—अप्रमत्ताद् द्वादशानामारम्भ सम्पराये चैकेनावसानं स्थात्तत्र न कापि दोषसम्भावना ॥

प्र० ९०८—ननु 'नातित्था य नियठय'त्ति कथ्यते, तत्कथं सङ्गच्छते ? तीर्थव्यवच्छेदेऽपि जातिस्मृत्यादिना तद्भावात्, अश्रुत्वाकेवलितरपक्षीयाना श्रवणादिति चेत् ।

उ० – सत्यं, तीर्थान्तर्गतानपेक्ष्य शासनपारंपर्याय साधून् वचनमिद, तत्रोच्छिन्नशासनवादिनां नावकाश इति तत्त्वम ॥

प्र० ९०९—नन्वार्यशय्यंभवस्य मनकपितेति विशेषणे किं कारणमिति ? चेत् ।

उ०—उद्धारकार्यस्यान्त्यपूर्विकर्त्तव्यस्य दशवैकालिकोद्धरणेन तदर्थं करणादिति ॥

प्र० ९१० – ननु श्रीउत्तराध्ययनानि मूलसूत्रतयोच्यन्ते, तथात्वे च श्रमणपर्यायस्य तदध्ययनेऽनपेक्षणात्, उत्तराध्ययनता चाचाराङ्गोत्तरकालमध्ययनात्, आचारश्च त्रिवर्षपर्यायायैव, तत्कथमिति ? चेत् ।

उ०—सत्यं, साम्प्रत तु दशवैकालिकानन्तरमेषामध्ययनात् दशवैकालिकस्य तु मूलसूत्रत्वेन श्रमणपर्यायानपेक्षणान्न काचित्क्षति, किञ्च—नाचाराङ्ग त्रिवर्षपर्यायाय देयतया मत, आद्याध्ययनानन्तरमेवोपस्थापनाया प्राक् भावात्, त्रिवर्षपर्यायापेक्षा त्वाचारप्रकल्पस्य निशीथापरपर्यायस्याध्ययनायेति प्राक्कालेऽपि न क्षति । ननूत्तराध्ययनानि दशवैकालिकानन्तरमेवाध्येयानीति पर्यायनियमस्याभावेऽप्युत्तराध्ययननियमस्त्वस्त्येवेति चेन्न तत्रापि नियम, अत एव भगवद्भिश्चूर्णिकृद्भिरध्ययनसम्बन्धानन्तरं सम्बन्धान्तर विपृच्छुप्रश्नोत्तरलक्षणमुक्तमिति ॥

प्र० ९११ – ननु उत्तराध्ययनानि धर्मकथाः ताश्चाक्षेपिण्यादिका इति केषामध्ययनानां कासु कास्ववतार इति ? चेद् ।

उ०—आद्यमध्ययन विपृच्छुगुणदर्शनाय द्वितीयमाक्षेपिण्यां तृतीयं विक्षेपिण्यां तुर्यादीनित्वध्ययनानि निर्वेदन्यामावतरन्तीति चूर्णिकारा भगवन्त ? इति ॥

प्र० ९१२—ननु मङ्गलस्य शास्त्रप्रारम्भरूपत्वात्कथं तस्य भिन्नाभिन्नत्वशङ्केति ? चेत् ।

उ०—मङ्गलादीनीत्यादिषु बहुव्रीहिं स च चेत्तद्गुणसविज्ञान मङ्गलमभिन्नमवयवार्थे चादिशब्दे अतद्गुणे तु भिन्नं सामीप्यार्थे आदिशब्दे सप्तम्यामपि शास्त्रारम्भे इति लक्षणायां नैमि-

न्द्रादिवत्पुस्तकपरिणमनीयानि तानि ततो द्रव्याध्ययने भावाध्ययनस्य पुस्तकलिखिताध्ययनोपयोगरूपत्वात् परिणमनीयानि पुस्तकानीति द्रव्ये ॥

प्र० ९१७–ननु 'निक्खेवेगट्ठनिरुत्ती'त्यादिकेषु व्याख्यानद्वारेषु किमिति 'तस्स फलजोगमंगले'तिद्वाराण्युच्यन्ते? इति चेत्।

उ०–सत्यं, सूत्राध्ययनविशेषमनुसृत्य 'निक्खेवेगट्ठे'तिव्याख्याद्वारगाथा, 'तस्स फलजोगे'त्यादिद्वारगाथा त्वनुयोगमेवाश्रित्य, अत 'तम्मेयनिरुत्तिक्कमपओयणाई'त्यादीनि द्वाराणि तत्रेति, एतान्योघनिष्पन्ने तत इति ॥

प्र० ९१८–ननु 'उवएसो सो नओ नामे'त्युक्त्वोपदेशस्य कुतो नयत्वमिति ? चेत्।

उ०–श्रोतृणामुपयोगान् वचनेनानेन सूत्रार्थो प्रापयतीति नयार्थत्वात् सम्भवत पर्यायाणामनुगमाद्वा, तत 'चरणाहितो मोक्खो'त्यादिवाक्यानां नयात्मकत्वेऽपि प्रामाण्याविघातः, एवमेव 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग' इत्यादौ ॥

प्र० ९१९ – ननु आवश्यकभेदेषु नामावश्यकमित्यत्र नामेति शास्त्रीयोपक्रमेषु आनुपूर्वीनामप्रमाणेत्यादिषु नामेति निक्षेपेष्वोघनाम्नी इति किं नामानेकत्रेति ? चेत् ।

उ०–सत्यं, वस्तुनोऽभिधानमिति, द्वितीये जातिरूपादिपर्यालोचनप्रकारे नमनात्, तृतीयं पर्यायाणामपि यथार्थतादर्शनमिति क्रमेण वस्त्वभिधानं परार्थता तदर्थनिरपेक्षतेति ॥

प्र० ९२०–ननु भव्यानामनुच्छेदसिद्ध्यै किमिति 'सिज्झंति जत्तिये'त्यादिगाथायुग्ममिति ? चेद् ।

उ०–प्रथमया सिद्ध्यमानसमागमो हेतुः, द्वितीयापूर्वार्धेन त्रसत्वाद्ययोग्यानामानन्त्य, शेषेण निगोदानामव्यवहारिणामनन्तानन्त्यमिति सिद्ध्ये यत्न ॥

प्र० ९२१ – ननु परतीर्थिकैरुपक्रमादिको व्याख्याक्रमो नाधिकृत कथमिति ? चेत् ।

उ०–स्याद्वादाश्रयणभीत्या, न हि नामादिचतुष्कमयत्वमर्थानामभिप्रैति न चानुपूर्व्यादिविविधपर्यायमयत्वं न च सामान्यविशेषमयत्व न च सूत्रार्थोभयमयत्वं, सापेक्षव्याख्यानं त्वेकान्तवादे न स्वप्नेऽपीति नोपक्रमादिव्याख्या ॥

प्र० ९२२–ननु 'संहिता च पदं चैवे'त्यादिके व्याख्यालक्षणे सूत्रानुगमस्य किं स्थानमिति ? चेत् ।

उ०-सत्य, नहि तावत् सर्वैकावस्था तद्भेदे प्राप्तगुणावस्थानवृद्धिपूर्वकदोषोद्घाताय यत्य, तत्र समीपेभ्यो गुरु स्यादादेष्टेति, किञ्च-परमगुरुत्वमाप्ता गणभृतोऽपि भगवत्पादकमलामर्शिन इति ॥

प्र० ९२९-ननु जिनबिम्बानां या द्रव्यस्तवे पुष्पादिभि पूजा क्रियते सा कामवस्थामधिकृत्य क्रियते ? इति चेत्।

उ०-आदौ तावत् अन्ये जीवा सिध्यन्तो विविधाकृतिभाजो भवन्ति न तु जिनपतय, तेषां तु सिध्यतां द्वे एव पर्यंकासनरूपा कायोत्सर्गासनरूपा चैत्याकृत्यौ, अतो भगवतां यानि कानिचित् प्रतिबिम्बानि तानि सर्वाणि तदन्यतराकृतिभाञ्ज्येव, तथा च प्रतिमा भगवता जिनानां सिद्धावस्थाकृतिमत्य एव मान्या नान्यविधा', यच्च जन्माभिषेकादिक्रियासु बाल्याद्यवस्थाचिन्तनं तदारोपितं, तथा च पंचस्वपि कल्याणकेषु जिनानां विशेषमहनीयत्वात्तत्तत्कल्याणकावस्थानां कल्पनं स्यात् परं पूजाप्रकारास्तु सर्वेऽपि सिद्धदशान्त जिनमवधार्यैव, कथमन्यथा च्यवनादिकल्याणकेषु शक्रस्तवादिभिर्वन्दनीयता सिद्धान्तसिद्धा युज्येत, अन्यथाप्यज्ञातभगवत्परिपूर्णावस्थानां स्नात्रादिभिर्जन्माद्यवस्थास्मृतिरापाद्यमाना न विरुद्धा मार्गाचरणाशयत्वात्, तत्त्वतस्तु यथा जगति गृहमुपागतानां सत्कारार्हाणां नृपादीनां या ससम्भ्रमा सत्क्रिया लोके सिद्धतमा सैवात्र परमार्हति क्रियमाणा भक्तत्वं ध्वनयति ॥

प्र० ९३०-ननु बाह्ये अभ्यन्तरे च तपसि निर्जराहेतुत्वे समानेऽपि किंकृतो भेद ? लौकिकानामनुकारस्तूभयत्रापि दृश्यत एवेति चेत् ।

उ०-सत्य, आदौ तावद् बाह्य तपो मिथ्यादृशां देवादीनामप्यावर्जक, किञ्च-बाह्यदर्शिनो लोका रहितमप्यभ्यन्तरेण परमकर्मक्षयकारणेन तपसा अनशनादितपस्तप्यमानं दृष्ट्वा तपस्वी असाविति सव्यवहरन्ति,। तत्त्वतस्तु बाह्यतपसामङ्गीकारकाले एव गुरुसव्यपेक्ष न तु निर्वाहकालादौ अभ्यन्तर तु तप स्वीकारनिर्वाहनिष्ठापनादिषु सर्वत्राचार्यादिगुरुसव्यपेक्षमिति गुरुकुलसापेक्षमेव नत् नान्यथेति मोक्षहेतु ध्याने गुरुकुलप्राप्यश्रुतक्रमोत्तरापाद्ये, उत्सर्गश्च गुरुकुलोपवसनसिद्धमोक्षमार्गाराधनानामन्त्यावस्थायां बाह्याभ्यन्तरोपध्यो स संलेखनाभक्तपरिज्ञादिविधिपुरस्सर एव, अपरकालीनस्त्वयमोद्रतायां सलीनतायां च बाह्ये तपस्यनुगत इति ॥

प्र० ९३१-ननु भगवतो जिनेश्वरान् 'लोगनाहा धम्म-

नत्वेऽपि परेषां साधुप्रतिमानामधिकरण सन्निधानं च कथं ते स्युरिति ? चेत्।

उ०—सत्यं, प्रतिबन्धककर्मणां क्षयोपशमो विचित्रतया भवति, प्रत्येकबुद्धादीनां वृषभादिनोऽपि बोधिलाभादे श्रवणात्पर ते वृषभादयो न साधनाधिकरणादितया व्यवहार्या, किन्तु य एव साधुप्रतिमादयो बोध्युत्पादादिषूपयुज्यन्ते न एव साधनादितया व्यवहरणीया, तत एव च ते तदर्थिना आराध्यपूज्यतास्थानमितिज्ञापनायावश्यकादिषु साधनादितया साध्वादीनां निवेश इति गम्यते ॥

प्र० ९३६—ननु 'उच्चालियमि पाए'त्योघनिर्युक्तिगाथायां पादे उच्चालिते पादे कथं व्यापत्यादि, अधोन्यास एव तद्भावात्, कथं च कुलिंगिनो व्यापत्त्यादि, पञ्चेन्द्रियाणामपि तद्भावात् कथं च व्यापत्तिशब्दे सति भिन्न मरणं प्रोक्तमिति ? चेत्।

उ०—सत्यं, अनिवर्त्यपादगत्यर्थ उच्चालनशब्द., कुलिङ्गित्वं चाकस्मिकगतिरूपजीवलिङ्गार्थ. व्यापत्तिशब्दश्च साधुगतमरणकारणक्रियार्थ इति सर्वं सुस्थमिति ॥

प्र० ९३७—ननु व्यवहारभाष्ये तीर्थोद्गारातिदेशे यस्मिन् यस्मिन्नाचार्ये यदा यदा यस्य यस्याङ्गादिवस्तुनो व्यवच्छेद स वाच्य इतिनिर्देशादङ्गादिश्रुतानां व्यवच्छेदो मान्योऽधुनाऽऽशाम्बरवदिति ? चेत्।

उ०—यावत्तीर्थकालस्येति वृत्तस्य तत्र भणनं, तीर्थस्यान्ते दशवैकालिकमेव स्थास्यति तदर्वाक् शेषाण्युच्छेत्स्यन्तीत्येव तदर्थं, श्रीभगवत्यां यावद्वर्षसहस्रं पूर्वस्यानुवृत्ति' स्पष्टाभिहितेत्याशाम्बरवाक्तु निस्सारैवेति, उपलम्भे चाङ्गादे श्रुतस्य व्यवच्छेदाभिधानं जीवत देवदत्त त्व मृत इति कथनवदाशाम्बरवाक्यमसत्तममेवेति

प्र० ९३८—ननु श्रीमद्भिरुमास्वातिवाचकै स्वारस्येन द्रव्यस्य किं लक्षणमभिप्रेतमिति ? चेत्।

उ०—धर्मादीनजीवकायानुक्त्वा 'द्रव्याणि जीवाश्चे'त्येतावन्मात्रमुक्तं न तु जीवकालौ चेति, तत् ज्ञापयति यदुताग्रे उक्तं 'नित्यावस्थितानी'ति द्रव्यलक्षणं, अत एवारूपाणीति न समस्तं, तथा च नित्यत्वमवस्थितत्वं चेति द्रव्यलक्षणे, तत्र नित्यत्वमप्रच्युतत्वं तद्भावसद् यत्तद् द्रव्य, अवस्थितत्वेन परापरिणामित्वं, तथा च परापरिणामि सद् द्रव्यलक्षणं, तत एव च तथाद्रव्यत्वाभा-

लोकस्य सिद्धत्वेऽपि गतिस्थितिपरिणतानां तेषामेक एवोभयत्रापि वृद्धानां गतिस्थित्योर्यष्टिरिव स्यात्सहायकमुभयस्वभावं द्रव्यं तदा का हानिरिति ? चेत्।

उ०-सत्य, प्रत्येक लोकाकाशप्रदेशेषु समसमयमनन्तानां जीवपुद्गलानां गतिपरिणतानां स्थितिपरिणतानां भावात्सर्वत्र लोकाकाशप्रदेशेषु परस्परविरुद्धसहायकरणस्याभावाद्विरुद्धस्वभाव द्रव्यद्वयमेव धर्माधर्मरूपमावश्यकं, एकस्मिन्नपि आकाशप्रदेशेऽवगाढेषु जीवपुद्गलेषु देशादिना गत्यादिभावाच्च भिन्ने एव सहायके इति ॥

प्र० ९४३-ननु यथाप्रवृत्तेनायुर्वर्ज्यानामभ्यन्तरकोटाकोटीमागरमानायाः स्थिते सर्वेषां कर्मणां करण, द्वितीयेनापूर्वकरणेनानन्तानुबन्धिनां सर्वेषां भेदनं भेदे च तेषां केवलाद्यावरणाभावे केवलवत्सम्यक्त्वप्रतिबन्धकानां व्यपगमात् कथ न सम्यक्त्वगुणस्याविर्भाव ?, न च तेषामपर मोहनीयमस्ति यत्तद्भेदे प्रादुष्ष्यात्, ततश्च तृतीयेनानिवृत्तिनाम्ना करणेन च किं करणीयमिति? चेत्।

उ०-सत्यं, अनन्तानुबन्धिनो हि कषायाः, कषायाश्च रागद्वेषशाखारूपा ततोऽनन्तानुबन्धिभेदेन या प्राक् तत्त्वेष्वप्रीतिप्रीतिश्चानत्त्वेष्वभूत् सा नष्टा, ततश्चारक्तद्विष्टत्वात तत्त्वानि प्रत्येतु योग्यो जात', अनिवृत्तिकरणेन तदेव तत्त्वप्रतीतिबन्धकं दर्शनमोहनीयं विनाश्यते ततश्च प्रीतिमानवश्यं प्रतीतिमान् भवतीति न द्वितीयं कृत्वाऽकृततृतीय उपरमते जीव इति योग्यमेव करण क्रमश्चेति ॥

प्र० ९४४ ननु युगप्रधानै श्रीकालकाचार्यैः प्रतिष्ठानपुरस्थश्रमणसंघाय यत् सन्दिष्ट यदुत-मदागमानन्तर पर्युषितव्यं तत् किमवस्थानपर्युषणामाश्रित्य पर्युपासना क्षामणारूपां वा तामाश्रित्य ? नैकस्यामपि सन्देशस्यार्हता, आद्यायां यथायथं सर्वेषां वर्षावासयोग्यद्रव्याद्युपपत्तौ करणात् , द्वितीयस्यास्त्वविचलत्वादिति चेत्।

उ०-सत्यं, अवस्थानरूपां तामाश्रित्य स सन्देशः, क्षेत्रस्वामिका आदाववस्थिता स्यु पश्चादागतास्तु तदुपसपन्ना, न च ते तानुपसम्पद्यन्ते युगप्रधानत्वात् , ततो योग्यं तदर्थ सन्देशनमिति ॥

प्र० ९४५-ननु मुख्यवृत्त्याऽऽषाढ्यां पर्युषणाऽऽद्या भवति, सा किं न विहिता कालकाचार्यैः प्रतिष्ठानस्थश्रमणसंघेन चेति? चेत्।

उ०-सत्यं, प्राक्तनेषु वर्षेषु लोकादेशरूढ्या तं स्वयमेव नृपमनपेक्ष्य चक्रु पर तस्मिन् वर्षे कारणात् कुतश्चित् नृपविषये तत्प्रवृत्तावचाल्य आग्रहो जात इति तदेव परावृत्ति पर्वेण करणतामागता इति ॥

प्र० ९४९-ननु अपर्वरूपाया चतुर्थ्यामनतिक्रमहेतु पुरस्कृत्य ये सांवत्सरिकरूपा क्षामणापर्युषणामकार्षुराचार्यास्त एव गर्दभिल्लोच्छेदका कालकाचार्या अन्ये वेति ? चेत् ।

उ०-त एव अत एव गर्दभिल्लवृत्तं पुरस्कृत्य भानुमित्र उपशमितो बलभानुभागिनेयदीक्षया रुष्टोऽपि भगिन्येति स्पष्टं कथावल्यां भद्रेश्वरसूरिसूत्रितायां, तथाच श्रीकालिकाचार्यात्प्रभृति चतुर्थ्यां क्षामणापर्युषणाया यथाऽऽचरणा तथैव प्राक्काले साध्ववस्थानक्षामणारूपं भिन्नं यत्पर्युषणापर्वाभूत् तदेकीभूय प्रवृत्तमिति न तत प्रभृति अवस्थानाक्षमणारूपं पर्युषणाद्वय, अत एव च सामाचारीसूत्राणामन्ते 'सवच्छरिय थेरकप्प'मिति सूत्रम् ॥

प्र० ९५०-सव्वप्पवायमूलं, दुवालसंगं जओ जिणक्खाय। रयणायरतुल्लं खलु, तो सव्व सुंदरं तमी' ॥ १ ॥ त्यनया गाथया मतान्तरीयवादानां सुन्दरत्वमनुमत्य तान् रत्नोपमानुक्त्वा द्वादशाङ्गवर्तित्वमाविष्कृतं, तथा च कस्यापि मतस्य नास्ति मिथ्यात्व न च खण्डनीयता. तत्प्रसङ्गे च द्वादशाङ्ग्या एव मिथ्यात्व खण्डनीयता च कृते स्यातमित्यापन्नं ,'उदधाविव सर्वसिन्धवः, समुदीर्णास्त्वयि नाथ दृष्टय । न च तासु भवान् प्रदृश्यते प्रविभक्तासु सरित्स्विवोदधि ॥ १ ॥ रित्युक्त्या त्वशेषाणां परेषां मतानां सत्योज्झितत्वं, तथा च खण्डनीयतांचितं मिथ्यात्व स्थिरीक्रियते, तत्किमत्र तत्त्वमिति ? चेत् ।

उ०-सत्यं, प्रथमवाक्यं तीर्थान्तरीयोक्तात्मपुण्यपापादीनां लौकिकप्रत्यक्षातिक्रान्तानां जिनोक्तानुवादेनोक्तत्वात्तेषां द्वादशाङ्गकप्रभवताख्यापनार्थं, द्वितीय तु भिन्नाभिन्ननित्यानित्यसामान्यविशेषसदसदाद्येकान्तमनुसृत्य परस्परघातप्रवृत्तप्रवादानामसारताया अनन्तधर्मात्मकस्याद्वादवचनस्य सारतायाश्च प्रतिपादनार्थमिति द्वयमप्येतद् भगवद्भक्तिपरायणताया एव सूचकमिति॥

प्र० ९५१-ननु 'गुणतस्तुल्ये तत्त्वे, सञ्ज्ञाभेदागमान्यथा दृष्टिः। भवति यतोऽसावधमो, दोष खलु दृष्टिमोहाख्य ॥ १ ॥ (सम्मोह ,) इतिवचनेन शब्दभेदस्य दोषतोक्तिर्दुष्टा नेत्युक्त, 'वजणअत्थतदुभये'त्युक्त्या परोक्तानामहिंसादीनां प्राणी

चेति सततत्त्व्या पवोपदेशः सम्यगुपदेश, श्रद्धाय च त तथावर्त्तनं मोक्षमार्ग इति जैनं मतमेव सम्यग् ॥

प्र० ९५५ – ननु श्रावकाणामणुव्रतादि कस्मिंस्तत्त्वेऽन्तर्भवतीति ? चेत् ।

उ० – तेषामणुव्रतादिभावेऽप्यगारित्वाद् भूयोऽविरमणाच्चाश्रव एव तत्त्वेऽन्तर्भाव, अत एव तत्त्वार्थे आश्रवाधिकारे वन्धात् प्राक् वर्णन, अत एव च श्राद्धानामेकैव देवगति श्रमणानां देवमोक्षे गतिद्वय सामायिकाधिकारे आवश्यकादाविति ॥

प्र० ९५६–ननु श्रमणोपासकानां प्रतिमाभ्यः साधूनां कथ प्रतिक्रमण ? साम्प्रतकाले साधुप्रतिमाभ्योऽपि कथ ? तद्योग्यसहननाद्यभावात्तासामप्यसम्भवादिति चेत् ।

उ०–प्ररूपणाया उभयासा भावात्तद्वैपरीत्यस्याश्रद्धानस्यापि च तासां प्रतिक्रमणीयत्वमविरुद्धमेवेति ॥

प्र० ९५७–ननु व्यूढप्रतिमाना श्रावकाणां द्वय्येव गति अनशनं श्रामण्यं चेति सत्यं नवेति ? चेत् ।

उ०–'भावेऊण ताण, उवेइ पवज्जमेव सो पच्छा। अहवा गिहत्थभाव'तिवचनात् गृहस्थत्वस्याप्याश्रयणं स्यादपि ॥

प्र० ९५८–ननु दशापि श्रमणोपासका उद्वूढप्रतिमा अनशनमेव प्रतिपन्ना इति किमुद्वूढप्रतिमानामेकैवानशन गतिरिति ? चेत् ।

उ० – ' पगाहादीयरेण 'तिवचनात्प्रव्रज्यां प्रतिमाकालेऽपि 'उवेइ पवज्ज'ति वचनात् पूर्णास्वपि च तासु प्रव्रज्यामपि स्वीकुर्यात् ॥

प्र० ९५९–ननु 'पच्छा किर ण पव्वइयव्वं, सो सावगधम्मे उज्झमितो भवति ( ण सक्कइ ) ताहे भत्तपच्चक्खाण संथारसमणेण भवितव्वं'तिचूर्णे 'आसेवितगिहत्थधम्मेण किल सावगेण पच्छा णिक्खमितव्व एवं सावगधम्मो उज्झमितो होति, ण सक्कति भत्तपच्चक्खाणकाले संथारसमणेण होतव्व'तिश्रीहरिभद्रीयाया कृतेर्वचनाच्च उद्वूढप्रतिमस्य श्राद्धस्य द्वय्येव गतिरितिवाच्यं, 'अहवा गिहत्थभावमि'त्यनेन विरुध्यते, विरुध्यते च शनकतुप्रतिमाशतेनेति चेत् ।

उ०–सत्यं, चूर्णिवृत्तिवाक्ये सम्बन्धग्रन्थरूपे, अग्रत संलेखनातिचाराणां व्याख्यानात्, सम्बन्धग्रन्थस्य नियमत्वे तु त्रिविधेऽभक्तार्थे एव पानक नान्यत्र पौरुष्यादावचित्तजलपाने च ॥

प्र०९६०–ननु यदि पौरुष्यादीनां प्रत्याख्यानं त्रिविधाहाराश्रितं

स्यात् यदा पानकाकारा उच्चार्या इत्युच्यते तदा त्रिविधाहाराश्रितेषु तेषु त उच्चार्या न वा ? कथं च तदोच्चार्यत्वे तेषां पानका-कारता ? आहाराश्रितत्वात्तेषां पानकाश्रिता एव पानकाकारा यत्र स्युरिति चेत् ।

उ०—सत्यं प्राक् तावदभक्तार्थे विहाय नमस्कारसहित-पौरुष्यादीनां सर्वेषां चतुर्विधाहाराश्रितत्वे नियम अत्र सूत्रोक्त-भणनायमुक्त्वा पारिष्ठापनिकाकारे त्रिचतुर्विधाहारप्रत्याख्यान-परिशेष चोक्त्वा 'जइ तिविहस्स पच्चक्खाति ताहे से कप्प-गस्स उ आगारा' इत्युक्तं ऐदंयुगीनपूर्वे च सूत्रे चतुर्विधमपि 'आहारं' इत्यत्र पाठेऽपि द्विविधाहारस्य त्रिविधाहारस्य पौरुष्या-दिप्रत्याख्यानमनुज्ञातमिति । श्रीयोगशास्त्रवृत्तौ च चतुर्विधाहार-पाठेऽपि द्विविधत्रिविधाहारप्रत्याख्यानमत्रेति उक्तं त्रिविधा-हारादिपौरुष्यादिप्रत्याख्यानानामेवाशङ्क्योपन्यास, तत्र पानका-हाराकारास्तदाश्रिता नर्या व्याख्यातेयेव श्रीदेवेन्द्रसूरयस्तु-मत च साधव शक्तिसद्भावे पौरुष्यादीनि चतुर्विधाहारस्य प्रत्या-ख्यान्ति तदभावे त्रिविधाहारस्य न तु द्विविधस्येति विवेकमाहुः, त्रिविधाहारप्रत्याख्यानिभ्यः त्रिविधाहारमेतेभ्य पानकेभ्योऽन्य

प्युत्सृजामीति व्याख्यायते त्रिविधाहारप्रत्याख्याने प्येतेषामेव पान-काकाराणामुच्चारात्रिति वस्तुतस्तु द्राक्षादीनां कर्कोटकाम्रजलादीनां च पानकाहारत्वात् एते पश्चिम पदे सौवीरादिजलेभ्योऽन्यमा गुप्तमनसां निषेधाय सूत्र, तत एव चैते पानकाकारा:, अन्यथा त्रिविधाहारादिप्रत्याख्यानस्याप्यत्र स्युरेते आकारा, श्रीदेवेन्द्र सूरयश्च पानकमाश्रित्येति स्पष्टमाख्यान्त्यपि परं तत्र 'पाणस्से'ति षष्ठी विवक्षायां, यान्या च सा व्युत्सृजामीत्याख्यातेन सम्बन्धात्या सम्बन्धलक्षणसम्बन्धे तृतीया तु विधेय एवेति अत पानाशनापद्मनाख्यानवृत्तादिकर्कोटकजलादिवर्तिनां त्रिकृष्णोक्त त्रिविधाहारनियमपवर्तिनां चैते आकारा, रात्रिकत्रिविधाहा-रादिप्रत्याख्यानिनस्तु यथा नियमवन्तोऽपि मूलगुणविरोधित्वात् प्रत्याख्यानस्य नोच्चारयितुमर्हास्तामिति पानकापवादा एते न तु अनशनापवादा इति तु सुधियो नूनं वेत्ति । ननु अत्र पानकस्यार्थे त्रिविधाहारं व्युत्सृजतीति कस्मात्कस्माद्रागवतित त्रिविधाहार-मित्यादि च कस्मात्पानं शास्त्रीयया मर्यादया अभक्तार्थे भाषा यथा च पौरुष्यादिस्थानेषु त्रिविधाहारो विषय एवेति किमत्र पुनः स्यात्प्रत्युत्सर्गेण ? श्रीपञ्चाशकादिप्रज्ञाप्तीक कथं च गमनीय-

मिति चेत्। शृणु अभक्तार्थप्रत्याख्यानानन्तरं हि तत् पानकाहारसूत्रं सर्वत्र आवश्यकचूर्ण्यादिषु मूलस्थानेषु तत्र पारिष्ठापनिकाधिकार. प्रवृत्त', तत्र च चतुर्विधाहारेऽभक्तार्थे यदि पानीयमुध्धृत तदा पारिष्ठापनिक कल्पते नान्यथेत्युक्त्वा त्रिविधाहारे पानीयस्यानुध्धृतत्वेऽपि पारिष्ठापनिकाया कल्प्यता निर्दिष्टा, तत्रैतत्सूत्रं सम्बद्धतया एतेभ्य पानकेभ्योऽन्यत्र त्रिविधाहारं व्युत्सृजतीति प्रत्याख्यानात् त्रिविधाहारामक्तार्थे पारिष्ठापनिका कल्पते इति सम्बन्धनाम्न काप्यनुपपत्ति., वस्तुतस्तु तुरादिककीटकादिजलव्युत्सर्ग एव सूत्रार्थ इति ॥

प्र० ९६१ – ननु प्रदेशबन्धस्य प्रकृतिबन्धादिषु प्रागेव भावात् प्रकृत्यादीनां तदाश्रितत्वाच्च प्रागेव स वक्तुमुचित उच्यते चान्त्ये तत् कथमिति ? चेत् ।

उ०–सत्यं, सकषायत्वान्मुख्यवृत्त्या बन्धभाव., स चावश्यं प्रकृत्यादित्रयविभागमय इति ते त्रय आदावुक्ता, किञ्च–'शुभः पुण्यस्ये'त्यादिवचनात् शुभाशुभप्रदेशविभागो योगाधीनो, न कषायाधीन इति पृथगन्त्ये प्रदेशबन्ध उक्त इति गम्यते ॥

प्र० ९६२ – ननु पुरुषवेदस्य तृणवह्निना स्त्रीवेदस्य च कारीषाग्निनौपम्यं क्रियते, तथा च स्त्रीणां तीव्रो वेदोदय स्वभावसिद्धः, जगति तु पुरुषा एव नरेषु तिर्यक्षु चाकामका भवन्ति, स्त्रियस्तु त्रस्यन्ति तत्कथमिति ? चेत्।

उ०–सत्यं, तृणवह्न्युपमया झटिति ज्वलनं विध्यापनं च ज्ञाप्यते, कारीषाग्न्युपमया घट्टनेन चिराज्ज्वलनं परं चिरमुद्दीपनं ज्ञाप्यते, ततो यथार्हमेवोपमाढ्यं वेदद्वये ॥

प्र०–९६३–ननु जीवा अष्टकर्मप्रकृतीः कथं बध्नन्तीति ? चेत्।

उ०–शृणु, ये छद्मस्था सकषाया जीवास्ते ज्ञानावरणीयोदयादज्ञाना', अज्ञानत्वाच्चाचक्षुरूपमनोदर्शनशून्या अवश्यं, निर्विचाराणां च दर्शनमोहनीयस्यावश्यमुदय उदिते च तस्मिन् जीवा मिथ्यात्ववन्तः मिथ्यात्वाच्च ततोऽष्टापि कर्मप्रकृतीर्बध्नन्ति जीवा इति ॥

प्र० ९६४–ननु ईर्यापथिकबन्धे आश्रवबन्धवेदनानीति त्रयं कथं भवति ? ह्यधिकसमयाभावादिति चेत्।

उ०–सत्यं, य. आश्रवसमय स एव बन्धसमय इति द्विसामायिकतैव तस्य, तत्त्वार्थकारास्तु सकषायत्वादिति लक्षणं बन्धस्य कुर्वन्तस्तत्कर्म बन्धमेव नानयन्तीति ॥

प्र० ९६८-ननु तपसा निर्जरा चेत्यनेन सूचितं द्वादशविधं तपो 'अनशने'त्यादिभि सूत्रैर्वर्ण्यते एव तर्हि क्षमादिके दशधोत्तमधर्मे तप कथं गृह्यते ? इति चेत्।

उ०-सत्यं, तत्क्षमादिसहचरितं तप प्रोक्तानशनभेदातिरिक्त प्रकीर्णक तप इति, न चागमोत्तीर्णं तत्, श्रीउत्तराध्ययनेषु 'पइण्णयतवे'त्युक्तत्वात्, प्रपञ्चित पञ्चाशकेऽपि तदेव प्रकीर्णक तपोऽन्त्यपञ्चाशके श्रीहरिभद्रसूरिभिरिति, श्रीस्थानाङ्गभगवतीज्ञातधर्मकथांतकृद्दशादिषु चागमेष्वपि प्रचुराणि प्रकीर्णकतपांसि निर्दिष्टान्येवेति ॥

प्र० ९६९-ननु धर्मभेदेषु प्रथममेवोपात्तोऽहिंसाभेदस्तर्हि पश्चात् संयमाख्यो भेदो गृहीत किमर्थमिति ? चेत्।

उ० - सत्यं, तत्राहिंसाशब्देन हिंसाया स्वरूप ज्ञात्वा श्रद्धाय तदकरण प्रतिज्ञाय तदकरणरूपं महाव्रत गृहीतमाद्यं, संयमशब्देन तु प्रवर्त्तनावसरे पृथ्व्यादीनां हिंसायाः परिहारेण प्रवृत्तिर्दर्शितेति स्पष्टो भेद ॥

प्र० ९७०-ननु शौचस्यालोभलक्षणस्य चतुर्थे श्रमणधर्मे उक्तत्वात् त्यागाकिञ्चन्यरूपयोस्तयोर्नावकाश तेनैतयोर्गतार्थत्वादिति चेत्।

उ० - सत्यं, त्यागेनात्र गृहीतानामपि संयमसाधनानामलोभरूपशौचाबाधेन यथायथं शैक्षकबालवृद्धग्लानादिषु संविभागोऽवश्य कर्त्तव्य इति ज्ञाप्यते, आकिञ्चन्येन च तथाविधानामेव धृतानां शरीरोपकरणादीनां स्वभोगार्थत्वेऽपि ममत्वभावो न कार्य किन्तु तुरग इवाभूषणादिषु निर्ममत्वेन भाव्यमिति ज्ञाप्यते, तथा च यथायथं त्रयोऽपि श्रमणधर्मा संयमार्थिनां सवरायाराध्या एवेति ॥

प्र० ९७१-ननु दिगाचार्यशब्देन के आचार्या गृह्यन्ते ? श्रीयोगशास्त्रे सचित्ताचित्तमिश्रवस्त्वनुज्ञायी दिगाचार्य इत्युक्तं पर कथं दिगाचार्या ? कथः च व्युत्पत्तिरिति ? चेत्।

उ०-शृणु, गच्छाधिपतय एव दिगाचार्या, अनुयोगाचार्याणामाम्नायार्थवाचकाचार्यतया ग्रहणात्, अत एव त्रिसंग्रहा निर्ग्रन्थीत्यत्र तत्त्वार्थभाष्यकारै प्रवर्त्तिनी दिगाचार्येण व्याख्यातेत्युक्तं, तथा च सचित्ताचित्तमिश्रवस्त्वनुज्ञायी दिगाचार्य इति यदुक्तं सर्वाधिपत्यदर्शनार्थं, शब्दार्थस्तु साधुसाध्वीनां संग्रहे दिग्बन्ध-

वा स्वार्थस्य स्वीकृत्य परात्मशक्तिरक्षणाद्य तर्हि वैयावृत्त्य स्वार्थोपसर्जनहानिभ्यामपि परेषां परमार्थसाधनपटुतायाः निष्पादनं करोतीति कथं तथाविध ? स्यादिति ॥

प्र० ९७५-ननु ब्राह्मीसुन्दरीभ्या श्रीमल्लीनाथजीवेन च किं तादृश सयत्नत्वे वर्त्तमानेऽपि कृत ? येन सम्यक्त्वात् लेभिरे च ते प्रतिपात तत्रापि स्त्रीवेदस्य बन्धनार्हतामिति चेत्।

उ०-सत्यं, 'कार्यकृद् गृह्यको जन' इति ब्रुवद्भिर्ब्राह्मीसुन्दरीजीवैराचार्यस्य लोकोत्तरतां प्रतिहत्य स्वार्थपरायणलोकपङ्क्त्यनुगता त्वाशाद्याशातना कृता महती 'आयरियं गणहर'मित्यादिवचनात्वाचार्याणामाशातका बोधिनाशतद्दुर्लभत्वद्वारानन्तसंसारितामेव भजेयुस्तच्च कार्यमनन्तानुबन्धिना नेतरेषामिति, वैयावृत्त्यविश्रामणाकारकाणा च साधूनां सातिशयगुणवत्त्वेऽपि निर्गुणत्वारोपणेनासूया स्पष्टैव सा च स्त्रीवेदनिबन्धनेति न विरुद्ध ब्राह्मीसुन्दर्यो सत्यपि व्यवहारश्रामण्ये प्रोक्तमहादोषद्वयात् मिथ्यात्वे गमन स्त्रीवेदबन्धश्च, श्रीमल्लीनाथस्यापि वयस्यानां गुणप्राप्त्यै सहायीभवनमितिलक्षणाया मैत्र्या समूलं विनाश ध्यात्वा सम्यक्त्वलक्षणाना शमादीना दत्तो जलाञ्जलि, तथा च मिथ्यात्वं, 'तित्थयरपवयणे'त्यत्र प्रवचनशब्देन श्रमणसंघस्य ग्रहणात्तदाशातकानां मिथ्यात्वादीनां सम्भवे न कापि विचारणा, परेषां स्वहीनत्वस्यानुचिन्तनमीर्ष्यारूपमिति स्त्रीत्व, तथा च सर्वत्र सस्त्रीवेदं जातं मिथ्यात्वमिति ॥

प्र० ९७६-ननु ज्ञानोत्तरसर्वज्ञानोत्तरयो' क. प्रतिविशेषो ? येन ज्ञानोत्तरं केवलज्ञान सर्वज्ञानोत्तर श्रुतज्ञानमित्युक्तमिति चेत्।

उ०-सत्यं, ज्ञानोत्तरत्वमनुक्रमेण स्थितानामन्त्ये यदुत्कीर्तनीयत्वेन तथा च केवलज्ञानमेव, सर्वज्ञानोत्तरत्वं च सर्वज्ञानेषु प्राधान्येन श्रुतज्ञानं चोद्देशादियोग्यत्वेन न छायावद्दृश्यमात्र किन्तु सद्भूतरत्नादानदानादिवत् दानादानादिक्रियायोग्य, शेषाणां ज्ञानानामपि तदेवानुयोजक तीर्थस्योत्पत्तिस्थितिप्रवृत्त्यौपयोगिकता मोक्षमार्गप्राप्तिसरक्षणवृद्ध्यादिविधायिता तस्यैकस्यैव श्रुतस्येति सर्वज्ञानोत्तरत्व श्रुतस्याहितमिति, ननु श्रुतस्य तर्हि ज्ञानोत्तरत्व कयापेक्षयोक्तमिति चेत्। अनुयोगारम्भे नन्द्यधिकारे सर्वज्ञानानि संस्तुत्य प्रकृतार्थे श्रुतस्य स्तवनादिति ॥

प्र० ९७७-ननु षट्त्रिंशदुत्तराध्ययनानि 'इइ पाउकरे बुद्धे नायए परिणिव्वुडे'त्तिवचनमवलम्ब्य जिनेन प्रणीतानीति केचि-

उ०—सत्यं, भद्रबाहो श्रुतकेवलिन स्वर्गमो वीरात् भगवत' सप्तत्यधिके वर्षशते राज्य च चन्द्रगुप्तस्य पंचपंचाशदधिके शते इति, तत्र तदुदाहरण नासङ्गत, शकडालश्च यद्यपि मन्त्री नन्दस्य नरपते पर सोऽन्तिम एवेति न काचिद्बाधेति ॥

प्र० ९८१—ननु अनुयोगद्वारादिष्वध्ययनस्य निरूपणे अक्षीणायक्षपणा इति त्रयं कथ्यते, तत्र क' सम्बन्ध ? इति चेत्।

उ०—'निक्खेवेगट्ठे'त्यादिकल्पवचनान्निक्षेपाणामनन्तरमेकार्थिकानि वाच्यानीत्यक्षीणादीन्युक्तानीति ॥

प्र० ९८२—ननु पारांचितप्रायश्चित्तस्याद्यसंहननेन सह विच्छेदे सति श्रीसिद्धसेनदिवाकरेण पारांचितमाचीर्णमिति-कथमिति ? चेत् ।

उ०—तपोनाम पारंचितं वज्रर्षभनाराचेन समं व्युच्छिन्नं न तु क्षेत्रकालनामनी, सूरिणा तु ते एवाचीर्णे ॥

प्र० ९८३—ननु कायोत्सर्गेण प्रायश्चित्तैर्वा व्रणचिकित्सा क्रियते पर तद् व्रणं गड्वादिवदात्मोत्थ चिकित्स्यते कण्टकादिवदागन्तुक वेति ? चेत्।

उ०—अतिचाराणामागंतुकत्वादालोचनोद्धारमात्रेण शोधनाच्चागन्तुकमेव ग्राह्य, इतरत्तु चारित्रमोहरूप क्षयोपशमादिमात्रसाध्यं गड्वादीनां लेपौषधादिवदिति ॥

प्र० ९८४—ननु भावना अनित्यताद्या' संवररूपा वैराग्यवर्धिन्यो द्वादश या या कथ्यन्ते, तासां क्रमेऽस्ति हेतु कोऽपि यथाकथंचिद्वेति ? चेत्।

उ०—गम्यते सहेतुकता, यतो जीवस्तृष्णाजलाभिषेकेणैव जन्मांकुरावलि जनयति, सा च धनदेहादिविषयेति, तेषामनित्यभावनया सा व्यवच्छिद्यते, बाह्यार्थानां तृष्णाया व्यवच्छेदेऽपि जीवनतृष्णाया दुस्त्याज्यत्वात्तत्र स्याच्छरणेच्छा मृत्यो रक्षणायेत्यशरणता भाव्यते, नाशेऽपि वर्त्तमानस्य भवस्य तादृशस्यैवानन्तर लाभसम्भवे किञ्चिदाश्वास स्यात् परं तदप्याश्वासस्थानं परापरस्थानयुग्गतिचतुष्करूपस्य भवस्य सम्भवात् भवभावना, दृष्टेऽपि भीमभवोदधौ भ्रमणे देहस्वजनाद्या सुहृदु खसहचारिण सम्बद्धास्तिष्ठेयुस्तदा स्यात्कश्चिदाश्वास', परं सर्वेऽपि भिन्ना आत्मन पृथक्पृथग्दशाभाजश्चेत्येकत्वं, स्वजनादिभिरारोपित सम्बन्ध, शरीरेण त्वात्मन क्षीरनीरन्यायेनाभेदसंसर्ग इति

तयाऽभिमतस्तत्कारणं च द्वादशधा तप इति तदेव निर्जराकारणतयोच्यते, अत एव च पापानुबन्धिनां भृगुपातजलज्वलनप्रवेशपञ्चाग्न्यादीनां न निर्जराभेदेषु निवेशः, महत्तरदुःखक्लेशसहनादार्त्तरौद्राभावात्तु भवेदुदयजा निर्जरा न च सा धर्मार्थिसाध्येति ॥

प्र० ९८९–ननु 'चत्तारि सरणं पवज्जामि' इत्यादौ शरणं किमिति ? चेद् ।

उ०–आपत्त्राणाय शरणमनाधारोऽन्वेषते, श्रित्वा च शरणं तद्भक्तो भवति, न तु कृतघ्नः, तद्वदत्रापि भवापत्त्रस्तोऽर्हदादीनाश्रयति, आश्रितश्च भक्तिं करोति, अतथाभूतः कृतघ्नः ॥

प्र० ९९०–ननु सूत्रेषु अध्ययनोद्देशादीनां समाप्तौ 'इति बेमी'त्यस्य व्याख्यां कुर्वन्त इतिशब्दस्य तीर्थकरगणधरोपदेशेन न तु स्वमनीषिकयेति कथयन्ति, तत् तत्र कथमनुश्रितमिति ? चेत् ।

उ० – सर्वत्र 'सुयं मे आउसतेणं भगवया एवमक्खायं'मित्युपक्रमस्यादावनुवृत्तेस्तथोक्तिर्युक्तियोग्या प्रस्तुताऽपि चेति ॥

प्र० ९९१–ननु परिषहाणां कर्मसु यः समवतारः क्रियते, स किं परिषहकारकाणां कर्मापेक्ष्य सोढुर्वा ? आद्यो न क्षोदक्षमः, क्षुत्तृडादीनामजीवकर्तृकत्वात्तेषां च कर्माभावः, सोढुश्चेत् सोऽपि उत्थानापेक्षया परिषहाणां तेषां सहनापेक्षया वा ? आद्यो न योग्यः, ब्रह्मचर्याचेलत्वादीनां चारित्रमोहक्षयोपशमप्रभवत्वाद्, द्वितीये तु मार्गाच्यवननिर्जरार्थं तेषां सहनात्क्षायोपशमिकत्वापातात्, असहनापेक्षयेति कथ्यते चेत् क्षुदादीनामसहने आर्तध्यानादिभावात् सर्वेऽपि मोह एवावतरेयुरिति ।

उ०–सत्यं, पारम्पर्येणासोढृणामार्त्तध्यानादि स्यात् परं ते आपद्यन्ते अवतारोक्तकर्मभ्यः तदसहनं चोक्तकर्मभ्य, आर्त्तोत्पत्तिस्तु तदसहने परम्परया तज्जये च तत्तत्कर्मणां निरनुबन्धो व्यवच्छेदः सम्पद्यते इति, अतो युगपदेकान्नविंशति ॥

प्र० ९९२–ननु षट्स्वाहारकारणेषु वेदनापराभवः कारणतयोक्तः तथा क्षुद्वेदनीयोदयात् क्षुत्प्रभवः, एवं चाहारो एषणीयादिविशेषणे गृहीते परिषहजयो न जायते इति चेत् ।

उ० – सत्यं, नैगमाद्यास्तथावस्थायामभ्याहारस्य वर्जनमेव परिषहसहनतयेच्छन्ति, परमृजुसूत्राद्यास्त्वनेषणीयाप्रासुकाशनवर्जनेन तदिच्छन्तीति तदपेक्षया परिषहजय एव भिक्षादाने इति ॥

प्र० ९९३–ननु गृहोपाश्रययोः को लघुर्महान् वेति चेद् ।

उ०– यत्र गृहभागे साधूनामवस्थानमनुज्ञातं तत्स्वामिना

उ०–आपतितेषु परिषहेषु प्राकावदध्यासनं श्रेय', तदशक्तौ संयमबाधासम्भवे वा संयमबाधं परिहृत्य सहनं, परमरतिपरिषहस्त्वादावेव तस्या अनुत्थानेन सहनं, यतस्तस्या आपातमात्रेण संयमबाधापत्तिः, अत एव 'अरइं पिट्ठओ किच्चे'त्येव शास्त्रोपदेशः, उत्पन्नायां तस्यां न नरः स्वयं स्थातुं शक्तो न च तद्वन्तमपरोऽपि धर्मे स्थापयितुं समर्थ इति ॥

प्र० ९९८–ननु धर्मस्य के हेतव' किं स्वरूपं के भेदा किं फलं कोऽनुबन्धश्चेति ? चेत्।

उ०–शृणु, अभ्यन्तरो हेतुर्ग्रन्थिभेदेन सम्यक्त्वं तदन्तरेण साधकत्वाभावात्, तत्रापूर्वानिवृत्तिकरणरूपाद्यात्मपरिणामो हेतुः, व्यवहारतस्तु–'साधुसेवा सदा भक्त्या, मैत्री सत्त्वेषु भावतः । आत्मीयग्रहमोक्षश्च, धर्महेतुप्रसाधनम्' ॥ १ ॥ इति श्लोकोक्तास्त्रयो हेतव', स्वरूपं तस्य मोक्षहेतुकसंवरनिर्जरे अभ्यन्तरेण, बाह्येन तु समित्यनशनादिप्रवृत्तिस्तत्त्वेन श्रयणीयं तु विरोधरहितागमोक्तानुष्ठानं मैत्र्यादिभावनायुक्तं, अनुष्ठानस्य कथञ्चिद्बाधेऽपि भावनाया अवस्थाने तिष्ठत्येव धर्म इति भावनाविशेषणरूपा, अत एवानुष्ठानधर्मभ्रंशो बालसुलभो न तु जीवभावनाधर्मनाश इति, भेदाश्च साध्यापेक्षयाऽऽन्तराणि तुर्यादीनि गुणस्थानानि, उपशमस्य प्रतिपातित्वेऽपि गुणरूपत्वाद् धर्मभेदत्वं नष्टौपशमिकक्षायोपशमिकौ प्रतिपातिनावपि न सम्यक्त्वज्ञानचारित्रहेतू नेति, परिणामापेक्षया सम्यग्दर्शनज्ञानचारित्राणि यतस्तेषां सिद्धावप्यवधानं, प्रवृत्तौ गृहिसाधुसाधारणा दानशीलतपोभावा, संयतापेक्षया अहिंसासंयमतपांसि श्रावकापेक्षया 'देवपूजा गुरूपास्तिः, स्वाध्याय संयमस्तप'। दानं चेति गृहस्थानां, षट् कर्माणि दिने दिने' ॥ १ ॥ इतिश्लोकोक्ताः, फलं तु लौकिकसाधारण्येन दुर्गतिरोधपूर्विका सुगतिप्राप्तिः, लोकोत्तरे विघ्नाशाहितस्थैर्यवृद्धिरूपा मङ्गलता पारम्पर्येणापवर्गप्राप्तिरिति ॥

प्र० ९९९–ननु 'चत्तारि नाणाइं ठप्पाइं ठवणिज्जाइं'ति प्रोच्यन्ते, तत्र द्वयमेकार्थं ततः कथं तयो' प्रयोग इति ? चेत्।

उ० – आद्ये स्थाप्यानीतिपदेन तेषां दानादानाद्यभावादनुयोगस्याविषयतोक्ता, द्वितीयेन तु तत एव तेषामुद्देशाद्ययोग्यतेति, स्वरूपोद्देशाद्यनधिकारित्वस्य तेषां दर्शनाय कृत्यान्तं पदद्वयं सहैवेति ॥

प्र० १००० – ननु भगवतो महावीरस्याद्यसम्यक्त्वला-

च शत पञ्चाशच्च श्वासानामिति ॥

प्र० १००२–ननु चरणकरणसप्तत्यो को विशेष कति च तासु तासु मूलपदानि क्रमश्च तत्र किंहेतुक ? इति चेत् ।

उ०–निरन्तरमासेव्या चरणसप्तति, प्रसङ्गासेवनीया त्वपरा, आद्यायां व्रतादीन्यष्टौ तावन्त्येव पिंडविशुद्ध्यादीन्यपरस्यां, क्रमश्च चारित्र प्रतिपत्तेर्महाव्रताना तद्रक्षणाय श्रमणधर्माणामाचरणमुपदेशस्तद्वतामेव च सान्निध्यं परिणतेस्तथाविधाया रक्षणाय सान्तिकस्य सप्तदशधा संयम पृथ्वीकायरक्षादिक, कुलगणादीनां साहाय्यकानामातुरत्वादौ वैयावृत्त्ये यत्न', अनेन सघाटकादीनां स्वस्य च स्वास्थ्यसौष्ठवेन निर्विघ्न सविशेषमाराधना चारित्रस्य, परार्थसम्पादनप्रधानत्वाच्च तम्याव्याबाधसातोपार्जनादप्रतिपातिता, तदर्थं भक्तादिभ्य' पर्यटनेऽवश्य ब्रह्मगुप्तीनामाबाधा परित्याज्या ग्लानवैयावृत्त्यादिषु न ता अपोद्या इति, सर्वमपि एतद् व्रतादि ज्ञानाद्यर्थाय भव्यानां कर्त्तव्यमिति ज्ञानानि, तद्वांश्च कालाद्यष्टप्रकाराचाराराधनामययोगोपयुक्त एव तपो, नाशश्च तपोजनितनिर्जरादेरन्तरा क्रोधादीनां निग्रहमिति क्रोधादिनिग्रह इति चरणसप्तति, सन्तु च वेदनादिषु कारणेष्वाहारपिण्डशय्यावस्त्रपात्राणामन्वेषणं तच्च समितिमद्भिरेवेति ता', निर्गतेन पिण्डग्रहणायालोलुपतास्थित्यै भावितात्मता धार्येति भावना, तासामौदर्ये च स्याद्भिक्षाप्रतिमानामङ्गीकृतिरूपोऽभ्युद्यतविहार इति प्रतिमा, तासां महिन पालन जितेन्द्रियाणामेव परेषां तु दीर्घकालीनातकाद्यापत्तिरितीन्द्रयनिरोध ,अभ्युद्यतविहारिभिरितरैश्च स्थविरकल्पिकैरिन्द्रियनिरोधाय वसत्यादयो निराबाधा प्रत्युपेक्षणीया इति प्रतिलेखनानां पञ्चविंशति, ताश्च मनोवाक्कायगुप्त एव समाधत्ते इति गुप्तय, गुप्तिमानेव च द्रव्याद्यभिग्रहेपूद्यच्छेदित्यभिग्रहचतुष्कमिति करणसप्ततिश्चेयमिति दर्शितादन्योऽपि नानुचित सम्बन्ध इति ॥

प्र० १००३–ननु लौकिकसाधारणया कया व्युत्पत्त्या व्युत्पादनीयानि मत्यादीनि ज्ञानानि पञ्चापीति ? चेत् ।

उ०–शृणु, जगति व्यवहारं शिष्टाचारगतमनुश्रिता पञ्चेन्द्रियाः सञ्ज्ञिनस्ते च यदा यथा विषयानवगन्तुमिच्छन्ति तदा स्पर्शनादिभिरिन्द्रियैरुपयुज्यैवावगच्छन्ति, यद्यपि तत्रोपयोगे

उ०-शृणु, मिथ्ये ग्रन्थौ भूयो मिथ्यात्वावाप्तावपि तद्बन्धाभावात् यथाप्रवृत्तिकरणं तु नैव स्यात् अपूर्वकरणमपि अनादिमिथ्यादृष्टेरिति भाष्यकारवचनान्न स्यात्, अन्तरकरण त्वधिकस्थितेर्मिथ्यात्वादिसत्काया प्राग्वेदनात् स्यादेव, पर श्रीहरिभद्रसूरय अपिशब्दात् सादिमिथ्यादृष्टेरप्यवाप्तसम्यक्त्वपरित्यागिन पुनस्तल्लाभे इति व्याख्यानयन्त पुनरप्यपूर्वकरणसद्भाव दर्शयन्ति, तत्र चापूर्वमिवापूर्वमिति वाच्यमिति ॥

प्र० १००५–ननु 'जं मोणति पासहे'त्यादिवाक्येन केचित्कारकसम्यक्त्वमप्रमत्तमुनिगतं निश्चयसम्यक्त्वतया कथयन्ति, केचिच्च सदादिभिर्द्वारैर्जीवानां श्रद्धान यत्तत्तया कथयन्ति, केचिच्च प्रशमादिसमस्तलिङ्गयुक्तस्य निश्चयसम्यक्त्वतां ख्यापयन्ति, उक्तविपरीतं यच्छ्रद्धान अप्रमत्तसाधुव्यतिरिक्तसम्यग्दृशां सामान्येनैव श्रीजिनप्रज्ञप्ततया असदाग्रहरहितं जीवादितत्त्वानां श्रद्धानं प्रशमाद्यन्यतमैकादिलिङ्गयुक्तं तु सम्यक्त्वं व्यवहारसम्यक्त्वतया प्रतिपादयन्ति, मतान्येतानि क्रमश आचाराङ्गे पञ्चवस्तुके तत्त्वार्थे हारिभद्रीयायां वृत्तौ च क्रमश. स्पष्टतया प्रतिपादितानि, तत्र किं तत्त्वमिति ? चेत् ।

उ० – शृणु, आदौ तावत् लिङ्गधारिणीं पर्षदमाश्रित्य श्रीमद्भिर्गणधारिभिरादिष्टं यत् 'जं मोणं ति पासहे'ति यमेतं श्रीजैनमुनीनामाचार पश्यत तदेव मोक्षस्य सम्यक् पन्था इति सम्यक्त्वं पश्यन्तु नान्यदित्यनेन नाविरतादीनां व्युदास' किन्तु शाक्यादीनां लिङ्गिनामिति, सूत्राणि साधूनुद्दिश्यैव च सूत्रितानि गणभृद्भिरिति, मुनित्वस्य सम्यक्त्वेन सह व्याप्तेरुपादाने व्युदासो नाविरतादीनामिति परमेष सूत्रव्याख्यातात्पर्यार्थः, अनुयोगतात्पर्येण तु अप्रमत्तमुनीनामेव कारकसम्यक्त्वमधिकृत्य सम्यक्त्ववत्तामाख्याय शेषाणामविरतादीनां श्रद्धामात्रमधिकृत्य सम्यक्त्ववत्ताया आख्याय व्यवहारसम्यक्त्ववत्तोक्तेति, तथैव सर्वलिङ्गिनां सर्वदर्शनसमाश्रितानां गृहस्थानां च पर्षदि धर्मपरीक्षावसरे भाववादस्य वक्तव्यतायां यथायथं तत्त्ववाद' श्रद्धानायादरणीयतया ख्यातुमारभ्यते तदा दर्शनसप्तकक्षयोपशमादिलभ्यं सम्यक्त्वगुणमाश्रित्य सदादिद्वारैर्जीवादीना तत्त्वानां यथार्थतया प्रतीतिरेव सम्यक्त्वतया व्याख्येया स्यात् तथैव स्वदर्शनानुसारिण्यां पर्षदि सम्यक्त्वस्य व्याख्यायां क्रियमाणायां अदग्धदहनन्यायेन पुरोगतस्य साध्यस्य दर्शनार्थं समग्रप्रशमादिलिङ्गानां

प्र० १००८–ननु बौद्धीयेषु शास्त्रेषु 'समये ण'ति कृत्वा सर्वत्र समयेनोपक्रम' कृतो दृश्यते, जैनेषु चागमेषु 'तेण कालेण तेणं समयेण' त्युक्त्वा कालसमयाभ्यामुपक्रमो दृश्यते, तत्र को हेतुरिति ? चेत्।

उ०–शृणु, बौद्धास्तावत्पर्यायाणमावयवानां च स्वीकर्त्तार इति समयलक्षणोऽवयव उपक्रमादिभागे धृतः, जैनास्तु द्रव्यपर्यायभेदाभेदं अवयवावयविभेदाभेदमेव च मन्यन्ते, तेन 'तेण कालेणं' त्यवयविन काल 'तेण समएण' त्यवयवभूतं समयरूप च कालमाश्रित्य विदधति शास्त्रषूपक्रम, दृश्यते हि तन्त्वादिषु भिन्नेषु शीतादिनिवारणस्याभावेऽपि तत्समुदायरूपेषु पटादिषु तच्छक्ति, न च तन्तवो नश्यन्ति न च पटो नोत्पद्यते, अत्रापि उत्सर्पिण्यादयोऽवयविन कालसङ्केतधरा, निर्विभागस्तदंशस्तु समयसङ्केतधर इति द्वयोर्न्याय्य ग्रहणमिति, यथैव ह्यवयवाविनाभूतोऽवयवी तथैवावयवसमूहकार्यं समूह एव, द्रव्यपर्यायुगल तु धर्मधर्मित्वात्सहचरमेवेति ॥

प्र० १००९–ननु साधूनां यो नवकल्पो विहारस्तत्र किं मार्गशीर्षाद्या कल्पा वर्षावासाद्या वेति ? चेत्।

उ०–मार्गाद्या कल्पा, अत एव 'ऊणातिरित्ते अट्ठ विहरिऊण' त्ति, मार्गाद्या हेमन्ताश्च ऋतव इति मार्गाद्या कल्पा इति, पर्युषणाकल्पश्च वर्षावसानमित्यपि शास्त्रीयमेव, तथाचौघेनाष्टमासकल्प्या वर्षावासक्षेत्रागम इति ॥

प्र० १०१०–ननु कल्पशब्देन किमुच्यते ? इति चेत्।

उ० – 'सामायियकप्पट्ठिई'त्यादिवचनात् तत्तच्चारित्रवतां या मर्यादा सा कल्पशब्दवाच्या, पश्चाद्दशाकल्पव्यवहारेत्यत्र सामर्थ्याद्यर्थषट्कमनुश्रित्य कल्पते नोकल्पत इति क्रियापदद्वयमथ कल्प कथ्यते, बृहत्कल्पान्त्य 'पंचविहा कप्पठिई'ति लक्षणमागममाश्रित्य व्याख्याने छेदोपस्थापनीयवतामवस्थितो दशाधा कल्प इति, पर्युषणाकल्पान्त कल्प' पर दशाध्ययनदशकस्योल्लेखेऽष्टमाध्ययनस्य पर्युषणाकल्पेति नाम, स्थानाङ्गे दशमे स्थाने समवायाङ्गे च समवसरणवक्तव्यतातिदेशेऽपि च तन्नाम्नैव तदध्ययन कथ्यते, तत्र तु हेतु पर्युषणायाः सामाचार्या यदवश्य पञ्चाशत्यातिक्रान्तेष्वहोरात्रेषु यत्करणं नियमेन तत्कल्पशब्दवाच्यं, अत एव 'पुरिमचरिमाण कप्पो' इति निर्युक्तिवाक्यं, 'इच्चेयं सवच्छरियं'ति तु भाद्रपदशुक्लचतुर्थ्यामेव सांवत्सरिका-

दि मासत्येनि सामस्त्यमिति, तस्यत पर्युषणाकल्पस्य कस्य शम्‌ नियतमस्माभावारीसूत्रकथनार्थं इति ॥

प्र० १०११-ननु श्रीपुण्डरीकाख्यसोपायन श्रीसोपारकपुर नगरे( वडनगर )षु किमिति तत्रस्थानीयेरकत्रीभूय चैत्रपूर्णिमायां बिम्बमाध्यमानी तुपदेयतरमिथ्याविम्बयकारकास्येवित।

उ०-सत्यं, पुण्डरीकाख्यस्य तमहङ्कि सुपारीश्वरस्य काले मापारके पश्चात्तु पृथक्‌गाऽभूदिति तयोपायन तेषां तत्र हेतु स्यादिति ॥

प्र० १०१२-ननु पूर्वमस्मदर्धस्य ध्रुवसेननृपस्य समाधिमापातुमाया कल्पस्य वाचना आतेति पूर्वपापस्य सस्वेऽपि सतत पर्युषणायां श्रीचतुर्विधसङ्घसमक्ष श्रीकल्पसूत्रस्य विधा यत्‌ क्रियते तत्कुतः प्रवृत्तमिति ? चेत्‌।

उ०-अस्य श्रीमुनिसुन्दरसूरिभिः स्तोत्ररत्नकोशे 'संसारि कल्पावचनामायां तदानन्दपुरे न कः सुते' इत्युक्तं, ततोऽनन्तरं प्रभुत-श्रीमुनिसुन्दरसूरीश्वरकाले तु कल्पस्य प्रतिगयुषण श्रीमत्सङ्घसमक्ष वाचने प्रवृत्तिमदस्तीति, अत अग्येनारतद्रिपणारितु वह्निरयकाप्रतिदेशनेति ॥

प्र० १०१३-ननु यत्र चैत्ये मायतन पृथक्‌सतीक स्यात्तत्र चैत्यप्रवेशे गृहव्यापारनिषेधरूपाया नैषेधिक्या क्रियाऽऽयो भवेत्, पश्चादायतनस्य प्रदक्षिणात्रिक जिनव्यापारायलोकना विधिः सह कृत्वा तन्निषेधरूपाया द्वितीयनैषेधिक्या आयतनप्रारम्भेशो भवेत्‌ क्रिया, पश्चात्‌ गर्भागाराभिमुखस्य मावस्तवस्यारम्भे च जिनपूजापरिहाररूपाया अवसरो नैषेधिक्याः, परं यत्र चैत्यायतनयोर्युग्मं न स्यात्केवलमायतन स्यात्तत्र नैषेधिकीत्रिक कथमिति ? चेत्‌।

उ०-सत्यं तथाविधे मायतनस्य द्वारे नैषेधिकी प्रथमा पश्चात्‌ प्रविश्यायतन जिनपूजकार्यनिमाल्यनादि कार्य, कृते च तस्मिन्‌ भगवन्त प्रणम्य पूजादिकृत्तः तृतीया च सा गमपूजा विधिमे समानेवति ॥

प्र० १०१४-ननु भगवता श्रीमहावीरेण गर्भहरणसात शोकातिरेकं दृष्ट्वा देवानन्दायाभिशाला मा दुःख भूदिति पितृस्य कृते गर्भस्थेनापि निश्चलत्वं परं माहं श्रमणो भविष्यामीत्यभिग्रहः कथं केन हेतुना च कृत ? इति चेत्‌।

उ०-'माह भवनमंमि मासेस्यापुडे. साऽभिग्रह सप्तमे मासि कृतः, गर्भपाठ्मातिपु प्रयत्नमतिदापिततर दृष्ट्वा तथा

स्ततः स्नेहप्रकर्षं मत्वा तदा कृत इति ज्ञायते, अपरमपि कारण वदन्ति बहुश्रुतास्तदा न विरोध इति, सप्तमासातिक्रमेण पूर्णरूपात्वाद्गर्भस्य तथाभिग्रह, पूर्णकल्पत्वेऽपि स्वस्य अर्वाक्नाहीनप्रयत्नातिरेकेण पित्रोः प्रचुरस्नेहस्यैव कारणतावेक्षणात् प्राक्तु गर्भरक्षणेऽपि स्यादिति, तत्त्वतस्तु तथाविधतथाभव्यतैव तत्र कारणं यत्सप्तमास्यतिक्रम एवार्वाक्तन एव गर्भ एव चाभिग्रहापरपर्यायस्य विमर्शस्य करण, न चाभिग्रहोऽयं व्रतरूप, मिथ्यात्वादिविषयत्वादेव तस्य, व्रतादानविमर्शस्य नन्दिवर्धनादिविज्ञप्त्याऽन्यथाकरणवदन्यथाकरणस्यापि असम्भवाभावादिति॥

प्र० १०१५–ननु आचार्यादीनां सकषायत्वात् तेषां वन्दननमनादिषु कथं न कषायाणामनुमोदनाप्रसङ्ग ? अर्हदादिनिर्विशेषतया पूज्यन्ते परमेष्ठितयैते इति।

उ०–सत्य, यत्पदस्थास्ते आचार्यादयस्तत्पदार्हाचारवन्त एव ते इति तथाभावं पुरस्कृत्य वन्दनादिप्रवृत्तेस्तद्वर्त्तिनां कषायादीनामनुमोदना न, किन्तु तद्गुणानां बहुमान एव, नतश्चार्हदादिवत्तन्नमस्कारादिफलं, तथाचाविरतानामपि श्रेणिकादीनां सम्यक्त्वदार्ढ्यादिशंसया न तद्गताविरत्यादीनामनुमोदनाप्रसङ्गः, शेषगुणरहितानामपि भरतादीनां वैयावृत्त्यादिगुणानां शास्त्रेऽनेकशोऽनुमोदनादिति, पार्श्वस्थादयस्तु स्वस्थानविरुद्धाचारा इति

प्र० १०१६–ननु श्रीमदर्हदादीनां भगवतां यद् मंगललोकोत्तमशरणदायित्वानि गीयन्ते तद् धर्मस्यैव प्रभावात्, अत एव 'धम्मो वड्ढउ सासओ' इत्यादि सकलश्रीसंघेन गीयते, अशाश्वताश्चार्हदादय शाश्वतस्तु धर्म एव, यत' 'सिद्धे भो' इति कथ्यते, एव च कथं धर्मस्य मङ्गलत्वादीनि पश्चाद् गीयन्ते? इति चेत्।

उ०–सत्यं, परं श्रीअर्हदादयः सशरीरित्वादिधर्मैराराध्या उपास्याश्च धर्मस्तु न तथाविध इति केवल आराध्य एव नतूपास्य इति जीवपरिणामानां विशेषशुद्धिकारणत्वादर्हदादय प्रागुपात्ता इति, परमेष्ठिनमस्कारे चात एव न सम्यग्दर्शनादीरूपो धर्मो निवेशितः निवेशितश्चाराधनोपयोगिन्यां नवपद्यामिति, किञ्च–'केवलिपन्नतो' त्तिवचनेन श्रुतधर्मोऽयं स च प्रज्ञापकप्रामाण्याधीनप्रमाण, प्रज्ञापकाद्या अर्हदाद्या केवलिन इति तदपेक्षयाऽर्हदादीनामादौ मङ्गलत्वादिगानं योग्यमेवेति ॥

प्र० १०१७–ननु 'आणागिज्झो अत्थो, आणाए चेव सो

भहेयम्वो विईतिम विमुता, कहवविहिविराहणा हवरा' ॥ १ ॥
इतिवचनात् 'जो हेउवायपक्खम्मी हेउओ आगमे य आगमिओ ।
सो सिद्धविरिण्णू, कहवविहिविराहओ हवरा' ॥ १ ॥ इति वचनाच्च पदार्थानां द्विधा विभाग कृत्वा आज्ञाग्राह्या न दार्ष्टान्तिका न च दार्ष्टान्तिका आज्ञाग्राह्या पदार्था इति वदन्ति तत् किं यथार्थमिति ? चेत् ।

उ० शृणु आज्ञाग्राह्या न दृष्टान्तग्राह्या इत्यादिको या विभाग स तद्गाथायास्तात्पर्यमनवबुध्यैव, यतया गाथया एतदुच्यते-जगति वर्तमाना सर्वेऽपि पदार्था आज्ञाग्राह्या एव नुक्तो, 'ज जं नाणीहिं दिट्ठं तं तं तहा तहा परिणमइ त्ति सिद्धान्तस्याप्यावाधात् परं ज्ञानिप्ररूपितेषु सर्वेष्वर्थेषु केचिदर्थास्तादृशा भवन्ति ये परेषां प्रतीतिपथ दृष्टान्तेनापरानुमानाभिधानेनानीयन्ते, ते च पदार्था व्याप्त्यादिभिरनुमानेन प्रत्याय्यनीया, मत एव धर्माधर्माकाशास्तिकायानां क्वचिदनुमानमन्तरा क्वचिच्च तत्पूर्वक निरूपणं न विरोधमावहतीति, हेतुवादिका अहेतुवादिकाश्चेति ये विभज्यन्ते तत्र न किञ्चिदयुक्तं, यतो हेतुवो जायमाना भासादयो हेतुका उच्यन्ते जीवाजीवत्वभव्याभव्यत्वाद् यथाऽऽनुपमाना यथाहेतुका इति ॥

प्र० १०१८-ननु 'जायमि गिल्हियव्वे' इत्यादिगाथायां किमिति उपादेयो हेयश्चेति पदार्थद्वयमेवोक्तं?, तृतीयस्यापेक्षणीयस्य सत्त्वात् न च वाच्यं सेवराम्मेनानुक्त उपेक्षणीयोऽपि समुच्चीयत एवेति, यत उपेक्षणीयेऽपि यतितव्यमेवेति प्रयत्नविषयता योक्ता सा न युज्यत इति चेत् ।

उ०-सत्यं, सा गाथाऽऽवश्यकसूत्रस्य व्याख्याने नयद्वारे वर्तते आवश्यकीयेषु सूत्रेषु न कोऽप्युपेक्षणीयोऽर्थ उक्तः, अत्रत्यमावश्यका हेया गुप्त्यादिकाश्चोपादेया पदार्थास्तत्रोक्ता इति तान् अपेक्ष्यैवार्थान् उपादेया हेयश्चेति द्वावप्यत्र गाथायातीति तयोरुक्तेः

प्र० १०१९-ननु प्रवचनं हि श्रुतज्ञानरूपं ज्ञानं च गुण आत्मन इति न तत्राक्षरस्य सम्भव इति कथं प्रवचनस्य पुरुषरूपता ? येन तद् ग्रन्थनाह्नये कल्प्येत आचाराङ्गादीनां पादाद्यवयवस्वामीत्वं च कल्प्येतेति ।

उ०-सत्यं यथा हि मध्यमानामवबोधाय किमप्यरूप्यारूप्यु रूपाणां संघातोऽसत्यपि चरितत्वसाम्येन कल्पितमप्युच्यते तथा गुणरूपस्य प्रवचनस्य पुरुषत्वेन कल्पनं नानुचितं, अनुचितं तत्रोपमेय ये स्थापनाऽऽकाररीत्या आपकायाः, यात्रानुसारिणो

तु 'आवस्सयत्ति ठविज्जइ'त्तिश्रीअनुयोगद्वारवचनाद्यनुसारेणामूर्तानामपि तत्तदाधारकारकविषयाद्यनुसारेण स्थापनाया करणमाराधनं च नैवासङ्गत प्रतिभासेत, तथा च सिद्धे पत्तनत्वं ससारस्य सागरत्वं सयमस्य पोतत्वं स्रोतस्त्वमाश्रवाणां कपाटत्वं सवराणां यावद् भगवतामर्हतां महागोपमहामाहनमहानिर्यामकमहासार्थवाहादितया कल्पनं, असद्भूतमपि गुणादीनामपि चाकारभावमारोपेणाप्यभ्युपगच्छतां प्रवचनानुसारिणां न प्रवचनश्रुतस्य पुरुषाकारतया आचाराङ्गादीनां पादाद्यङ्गाकारतया अवधारणं आराधनं चानुचित, तत एव च 'लोगो जत्थ पइट्ठिओ' इत्यादिवचनैराधारताऽप्युच्यमाना ज्ञानस्य नासङ्गतेति॥

प्र० १०२० – ननु श्रुतज्ञानस्य प्ररूपणीयस्योद्योत्यस्य वा लोकस्यापेक्षणादेव लोकाकारेण पुरुषाकारता? पर वा कारणमस्तीति? चेत् ।

उ०-अस्ति तदन्यदपि कारण, यतो लोकोत्तरं श्रुत तदेव यत् जिनेन केवलालोकान्तर्गतपदार्थानां प्रतिपादन, 'वयजोगसुय' तिवचनात्, भगवतां देशनावाचश्च योजनगामित्वात्तीव्रप्रयत्नजैव तीव्रप्रयत्नजा च भाषा त्रिभि समयैश्चतुर्भिर्वाऽवश्य लोकं समस्त पूरयत्येव, लोकश्च वैशाखस्थानस्थितपुरुषाकार एवेति जिनप्रणीतस्य द्वादशाङ्गगणिपिटकस्य पुरुषत्वेन कल्पनं तदाश्रितपादाद्यङ्गत्वेन चाचारादीनां कल्पनं स्यात् तदापि नानुचितं स्याद्वादवादिनामिति ॥

प्र० १०२१ – ननु क्रियावादिन इति येऽभिधीयन्ते ते कृष्णपाक्षिकाः शुक्लपाक्षिका वा सम्यग्दृशो मिथ्यादृशो वेति ? चेत् ।

उ० – शृणु, द्विविधा हि क्रियावादिनोऽभिधीयन्ते–पाखण्डिन. प्रवचनाश्रिताश्च, तत्र सूत्रकृताङ्गसमवसरणाध्ययने ये क्रियावादितया प्रतिपादितास्ते मिथ्यादृष्टय एव, ये तु श्रीभगवत्यां दशाश्रुतस्कन्धे च क्रियावादितया प्रतिपादितास्ते नियमात्सम्यग्दृष्टय एव,अत एव श्रीव्याख्याप्रज्ञप्तिवृत्तौ श्रीमन्तोऽभयदेवसूरय आहुः, एते च सर्वेऽप्यन्यत्र मिथ्यादृष्टयोऽभिहितास्तथापीहाद्या सम्यग्दृष्टयो ग्राह्या', सम्यगस्तित्ववादिनामेव तेषा समाश्रयणादिति, तथाच प्रावादुकाना क्रियावादिनां मिथ्यादृक्त्वे अभव्यत्वे कृष्णपाक्षिकत्वेऽपि न दोष उच्यमाने, उक्तक्रियावादिनस्तु शुक्लपाक्षिका सम्यग्दृशश्चेति तु निर्विवादमेव ॥

प्र० १०२२–ननु आश्रवद्वारेषु इन्द्रियकषायादिवत् किमिति मिथ्यात्वस्य न ग्रह इति ? चेत् ।

मिथ्यात्वाद्यनुसारेणैव वन्धस्य तारतम्यं, सुदृशां च योगानां प्राशस्त्य तु भवत्येवेत्यनभिलाषेऽपि यावन्नावन्धकदशाया अवाप्तिस्तावदन्नश्य भवत्येव पुण्यस्य वन्ध इति ना चरमदेहतायां पुण्याभावो न चानवकाशतेति, एव च सम्यक्त्वाद्यनुष्ठानं निर्जराया एवाद्रियते, भवतस्तु ततो निर्जरा पुण्यवन्धश्चेति ॥

प्र० १०२६—ननु किमिति श्रुतज्ञान द्वादशाङ्गतया प्रोच्यते सर्वत्र अनुयोगद्वारनन्दीस्थानाङ्गसमवायाङ्गभगवतीश्रीतत्त्वार्थादिषु, यदि च द्वादशानामङ्गानां समुदाय इति द्वादशाङ्गमुच्यते श्रुत तर्हि द्वादशाङ्गसमुदायरूपस्याङ्गिन आकारोऽवश्यमभ्युपगन्तव्य, स च क कथ चेति ?।

उ०—प्रवचनपुरुषस्याङ्गानीवाङ्गानि तेषु प्रविष्ट तदभ्यन्तरमिति स्थानाङ्गे, श्रुतस्यापि प्रवचनपुरुषस्याचाराङ्गादीनि द्वादशाङ्गानीति नन्दीसूत्रे, श्रुतपरमपुरुषस्याङ्गानीवाङ्गानी द्वादशाङ्गानि आचाराङ्गादीनि इति समवायाङ्गे चोक्तत्वात् समग्रस्य प्रवचनस्य गणिपिटकस्य वा पुरुषरूपेणाङ्गित्वकल्पनं शास्त्रकृद्भिः स्थाने स्थाने कृतमेव, तत एव च श्रीनन्दीसमवायानुयोगद्वारभगवत्यादिषु सूत्रेषु 'दुवालसंगं' ति पदमसकृदुक्तमिति द्वादशाङ्गं श्रुतमाकृतिमत् स चाकार पुरुषरूप इति प्रागुक्तशास्त्रोक्तिभ्यो निश्चेयमेवेति ॥

प्र० १०२७—ननु आचारादीनां द्वादशानामङ्गानां गणिपिटकत्वेन कल्पनं तु न्याय्यमेव, यतो नहि भगवतामाचार्याणां विहायाचाराङ्गादीनि द्वादशाङ्गान्यपर सर्वस्वमस्तीति वाणिजस्य वालुजकमिवेद द्वादशाङ्ग श्रुतं तेषां सर्वस्वभूतमेवेति युक्ता गणिपिटकता तेषां, परं पुरुषत्वकल्पना तस्य द्वादशाङ्गस्य कथं क्रियते ? इति चेत् ।

उ०—सत्य, 'लोगो जत्थ पइट्ठिओ'त्ति 'लोगस्सुज्जोअगरे' इत्यादिवचनाच्च श्रुत लोकाधारभूत, लोकश्च वैशाखस्थानस्थितनराकार इति प्रवचनस्य पुरुषत्वेन तदङ्गानां चाचारादीनां पादाद्यङ्गत्वेन कल्पन नानुचितमिति ॥

प्र० १०२८—ननु सर्वेऽपि परतीर्थीया अकामनिर्जराका मन्तव्या इति ? चेत् ।

उ०—शृणु, प्रथमं तावद्ये अन्यतीर्थीया लिङ्गेन तथाविधा सन्तोऽपि भावेन जैनदर्शन प्रतिपन्नास्ते अन्यतीर्थीया अपि सन्त अम्वडपरिव्राजकादिवत्सम्यग्दृशो भवन्ति ते तु सकामनिर्जराका स्युरेव, शेषास्त्वधिकापचया मन्दपरिणामतया मिथ्यात्वस्य

कत्वादार्हतानामिति ।

उ०–सत्य, आश्रवाणां त्याज्यत्व संवराणां चादेयत्वमार्हतानां मुष्टिज्ञानमेव, पर तद्भावनिक्षेपं कर्मागमसंवरहेतुरूपमेवाश्रित्य ज्ञेय, ततश्च 'जे आस्सवा ते परिस्सवा जे परिस्सवा ते आस्सवे'ति वचन स्यादेव योग्यं, तत्त्वतोऽपि यान्येव गुणस्थानेष्वारोहस्थानानि तान्येव संक्लिश्यमानस्यावतरणस्थानानीति 'सव्वस्स चेव निंदे'-त्यादीनि कर्मागमनकारणान्येव, न तेष्वेकमपि संवरकारणमस्ति, ततस्त्यागोऽस्य धार्मिकाणां योग्य एव, लोकविरुद्धत्वेन त्याग-स्तेषां लोकेष्वपि स्वस्य करुणापरत्वं द्योतयितुं, यत आश्रवरूपा-ण्यप्येतानि आचर्यमाणानि दृष्ट्वा लोका आर्हतशासनानुगामिन एते इति कृत्वा शासनस्यावर्णं कुर्युः, तल्लोकविरुद्धानुष्ठातृ-भ्योऽपि परममध्यपद प्रवचननिन्दारूपमाचर्य दुर्लभबोधिका एव स्युः, अज्ञानान्धा हि अनुष्ठातॄणा नानुष्ठानानामधमतां विदन्ति विचारयन्ति वदन्ति वा, किन्तु अनुष्ठातारोऽननुकूला यदा स्युस्तदा तेषां देशकान् तच्छासन च निन्दन्ति, कृत्वा चैव भवन्ति तेऽनन्तससारिणो दुर्लभबोधिकाश्चेति, लोकानां न स्यादन-न्तसंसारिता दुर्लभबोधिकता चेति विचिन्त्य तेषां 'सव्वस्स चेव निंदे'त्यादीनां विधीयते त्यागो लोकविरुद्धत्यागनाम्ना तेषामुप-कारस्य प्राधान्य स्वकर्मबन्धादपि तेषामुपरि भावानुकम्पाया प्रवाहप्रवृत्तत्वादिति । अत एव जुगुप्सितपिंडत्यागप्रच्छन्नभोग-ह्रीप्रभृतिप्रत्ययिकवस्त्रादिधारणादीनि शासनधुर्यैरादिष्टानीति ॥

प्र० १०३३–ननु भगवतामर्हतां वीतरागत्वेनाकर्तृकत्वेऽपि किं तत्प्रार्थनया स्यादीप्सितानां सिद्धिरिति, स्याच्चेत् सयमतप-सोरानर्थक्य तत्प्रार्थनयैव तयो सिद्धे, उच्यतेऽपि च कैश्चि-द्यदुत-प्रार्थनयैव लप्स्यामहेऽपवर्गमिति विहाय सर्वाण्यपराणि कष्टानुष्ठानानि तत्परैरेव मुमुक्षुभिर्भाव्यमिति, न चेत् सिद्धि कथं 'होउ ममं तुहप्पभावओ भयव'मित्यादीनां प्रार्थनं तदर्थं च तृतीय प्रणिधानमिति ? चेत् ।

उ०–सत्यं, प्रार्थनया केवलया नैव काचित्परमपदप्रवणा-ऽर्थसिद्धिरिति सयमतपसोर्न कथञ्चनापि निरर्थका, परमध्य-वसायजन्यैव शुभाशुभकर्मणामादानक्षयौ, ततः परमपुरुषविषय-कपरमादर परमशुभाध्यवसायहेतुरिति कृत्वा तत्तन्नि श्रेयस-हेतूनां सिद्धेः, प्रार्थनाद्वारेणाध्यवसायानां तथाविधा शुद्धिर्वृद्धि-श्चोत्पाद्यते, भवन्ति च तेभ्यस्तादृशेभ्य इष्टसाधनानां सम्पत्ति-

लजातानि निबध्यन्ते यानि तानि कर्मेत्युच्यते, कार्मणशरीरं तु तन्नामककर्मप्रकृतेरुदयेन ये तज्जातीया कायपुद्गला गृह्यन्ते तथाविधशरीरतयैव संघात्यन्ते बध्यन्ते च स्वजातीयेन परजातीयैश्चौदारिकादिभिस्तत्कार्मणशरीरतयोच्यते इति भिन्ने ते द्वे अपि, वर्गणा तु द्वयोरप्येकैव पर कार्मणशरीरतया परिणम्यमाना कर्मवर्गणा पुद्गलास्तथाविधा येऽष्टानां प्रकाराणां कर्माणूनां बीजमिवाङ्कुराणां प्रसवसमर्था बदरादीनां कुण्डमिव चाधारभूता वा, तत एकवर्गणाप्रभवत्वेऽपि भिन्नतेदृशी तयोरिति, कार्मण ह्यपूर्वगुणस्य षष्ठांशे बन्धनाद्यवच्छिद्यते कर्मणो बन्धस्तु सयोग्यन्त्ये व्यवच्छिद्यते, एतद्वैषम्यमपि स्पष्टतया भेदमाख्याति, किञ्च–'ज वेयइ त बज्झइ'तिवचनात् 'कर्मत एव कर्मण स्वकृतस्ये'तिवचनाच्च कर्म अपरकर्मबन्धे उपयुज्यते न तु कार्मणं, अत एव कार्मणस्य बन्धेऽपूर्वे व्युच्छिन्नेऽपि यावत्सयोगिनं बन्धः कर्मण, न च सुखदुःखयोरुपभोगेऽपि कार्मणमुपयुज्यते ताभ्यां सह तस्य समानव्याप्त्यभावात् कर्मणोऽभावे तु निष्कर्मणां न स्त एव सुखदुःखे इत्यत्र शङ्कावकाश क? कर्मणां बन्धोदयनिर्जरासु कर्माण्यानन्तर्येण, पारम्पर्येण वा भवेयुः कारणानि कार्मण त्वन्तर्गडुप्रायमिति सर्वमेतत् तयोर्भिन्नत्वायालमेव, किञ्च–कार्मण हि शरीरमनादिसम्बद्धमेव, तच्च तथा तथाप्रकारेण शरीररूपेण परिणमति येनाशेषाणां कर्मणां सहावस्थानमात्मनि सम्पद्यते नवीनानि च कर्माणि तत्सहचरितोत्थेन योगेनापद्यन्ते च, कार्मण ह्युत्कृष्टतो विंशतिसागरस्थितिकमिति, परेषां सप्तत्यादिकोटीकोटीसागरस्थितिकानां कर्मणां कारणभूतमाधारभूतं च, ध्वनिभाषयोश्च यथैकभाषावर्गणामूलत्वेऽपि जातिभेद स्तथा कर्मकार्मणयोरप्येकवर्गणाप्रभवत्वेऽपि जातिभेदे कोऽपि न विरोध इति ॥

प्र० १०३७–ननु 'आद्ये परोक्ष'मितिवत् आद्यानामन्तरायस्य चेत्येव वाच्यं स्यात् किमर्थमादितस्तिसृणामिति ? चेत् ।

उ०–सत्यं, 'आद्ये परोक्ष'मिति सूत्रं 'मतिश्रुतावधी'त्यादिसूत्रादनन्तरमिति तत्रानन्तरस्यैव विधिर्वेत्यादिन्यायात् ज्ञानानामुपस्थानमस्ति तत आद्ये इति आद्ययोर्द्वयोर्ग्रहणार्थ युक्तं, अत्र त्वनन्तरं 'दानादीना'मितिसूत्रस्य सद्भावात् दानादित्रिकस्य ग्रहणं स्यात्प्रकृतिबन्धश्चात्राद्य इतिशब्देन प्राङ्निर्दिष्ट न तु स्वशब्देन, अतः प्रकृतिस्थितीतिसूत्रानुसारेण तिसृणां प्रकृ-

यश्चे'त्यत्र सूत्रे चकारः किमर्थः ? यत प्रागित' एकादीनीतिसूत्रे न च तत्समुच्चयोऽत्र विवक्ष्यते, अनुक्तसमुच्चयार्थश्चेत् न भाष्ये वृत्तिद्वये तत्समुच्चयनं किमिति न निर्दिष्टमिति ? चेत्।

उ०-सत्य, प्राक् तावत् एकादीनीनिसूत्रेण यथा मतिश्रुतादीनि छाद्मस्थिकानि ज्ञानानि न युगपद्वृत्तीनि तथा मत्यादीन्यज्ञानान्यप्ययुगपद्वृत्तीन्येवेति सूच्यते चकारेण, तथा च पूर्वसूत्रसूचितस्यायुगपदुपयोगार्थस्य चकारेण सूत्रण अनुक्तिश्च वृत्तिग्रन्थेषु मत्यादिज्ञानसमानत्वात् अन्यथेन्द्रियानिन्द्रियहेत्वादीन्यपि वाच्यानि भवेयुरिति, अन्यच्चानुक्तस्यापि समुच्चायनेऽयं यतो यथारूपाणि मत्यादीनि त्रीणि ज्ञानानि तथारूपाण्येवाज्ञानान्यपि परं नैकाश्रयाण्येतानि किन्तु ज्ञानानि चेत् ज्ञानान्येव त्रीण्यपि अज्ञानानि चेदज्ञानानि त्रिण्यपीत्यधिकरणपृथक्त्वस्य नियमात् नोक्तानि समुच्चिततयात था चाप्यर्थश्चकारस्तदा ग्राह्य', एव च विपर्ययाण्यप्येतानि त्रीणि विपरीतदृष्टौ सत्यां ज्ञानसमानहेतुकादीनीति फलितोऽर्थ इति ॥

प्र० १०५०-ननु श्रीहारिभद्रीये तत्त्वार्थ 'मतिश्रुताविभंगा विपर्ययश्चे'ति सूत्रं यत् तत्राविभंगशब्द कुत पठितः?, यतो न प्रागिन अविभंगज्ञानस्य स्वरूपादि किञ्चिदप्युक्तमिति चेत्।

उ०-सत्य, वाचका हि पारमर्षानुसारिणः, पारमर्षे च न कुत्रापि मत्यज्ञानादिवदवध्यज्ञानमिति प्रयुक्तं, न च कोऽप्यन्य शब्दोऽवधेर्विपर्ययवाचकतयोद्दिष्ट किन्तु विभंग इत्येवावध्यज्ञानं वक्तु निर्दिष्ट शब्द, अत एव भाष्य उक्तं अवधेर्विपर्ययो विभंग इत्युच्यते इति, ततश्चैतावत् सिद्धं यदुत-मत्यज्ञानादिवदवधेर्विपर्यये वाच्ये विभंगशब्दो वाच्य', विभंगस्य विपर्ययता च ऋजुतया यादृशी अविभंगशब्देन न तादृश्यवधिशब्देनेति, भगवद्भि श्रीहरिभद्रसूरिभिरुपलब्धो 'मतिश्रुताविभंगा' इत्येव पाठो रम्य', पर अविभंगोऽवधिरिति चेत् स्याद् भाष्यं विशेषत सुस्थमिति ॥

प्र० १०५१-ननु 'सर्वद्रव्यपर्यायेषु केवलस्ये'त्युक्त्वा परत किमि'त्येकादीनि भाज्यानी'त्यादिसूत्रं शरीरप्रकरणवत् 'तदादीनी'त्यस्यैव युक्तत्वाद्, यतो विहाय केवलं न मत्यादिषु एकमेकत्र भवति ज्ञानमिति चेत्।

उ०-सत्यं, प्राक् तावत् सूरयः श्रुतज्ञानमंगप्रविष्टादिकमतीन्द्रियार्थदर्शिदर्शितसिद्धान्ताधीतिपूर्वकप्रतीतिरूपं मन्यन्ते

नासग्रहणादिभेदं, ततश्च यथा जगति मतिज्ञानवतो श्रुतज्ञानादित्वं, ततश्च यथा केवलज्ञानं केवलं भवति तथा मतिज्ञानमपि केवलं भवत्येव ततश्च केवलस्यैकाकिताया अभाव 'तदादीनी'त्युच्यमानं न घटामियर्ति, अन्यच्चास्ति विप्रतिपत्तिरपि मत्यादीनां केवलज्ञानेन सहावस्थाने इति तस्या अपि संग्रह तदादीनीति सूत्रे न भवेद् ॥

प्र० १०५२–ननु मत्यादीनां यथाभूतता तत्तदावरणीये तदा केवलज्ञानावरणीयक्षये क्षायिकतया यथा केवलस्याविर्भाव स्तथा तत्तदावरणीयक्षये कथं न मत्यादीनां क्षायिकता कथं वा तत्तदावरणीयानां क्षयोपशमे क्षायोपशमिकमत्यादित्वम् न केवलज्ञानावरणीयादीनां क्षयोपशमे शुभानां वा तयोत्पन्नानां क्षायोपशमिकत्वेति ? चेत् ।

उ०–सत्यं, प्रभु तावदात्मा उपयोगस्वभाव-, उपयोगश्च यथावस्थितं केवलज्ञानं केवलदर्शनं चेत्युभयं, यदा चेन्द्रियादिप्रयोगयुज्यते आत्मा तदा ते तदंशा मत्यादिज्ञानतया चक्षुरादिदर्शनतया चोच्यन्ते तयोरप्यंशानां ये प्रतिबन्धकास्ते मत्याद्यावरणीयनयोच्यन्ते, ततश्च यथाऽऽत्मा रूपकांशाभूताः न चाणका रूपका न चाणके रूपकाः तद्वद् यावदंशानामुपयुक्ता न तावत्सम्पूर्णोऽवयवी सम्पूर्णे चावयविनि नांशास्ता तद्वच्च न मत्यादिषु केवलं न च केवले ते इति, किंच–न मत्याद्य सर्वविषयपरिच्छेदकास्तन्निमित्तानामिन्द्रियाणामतथात्वात्, अत एव न सर्वधर्मग्राहका अपि, केवलं तु सम्पूर्णोपयोगस्वभाव त्वदात्मनो नांशेष्वप्युच्यते एवं मत्यादीनां सर्वविषयकसर्वधर्मयुक्तत्वोपयोगाभावाच्च क्षायिकता न घातकत्वात् केवलस्य क्षायोपशमिकता, अंशप्रतिबन्धकास्तु सम्पूर्णोपयोगे न भवन्त्येवेति क्षयो मत्याद्यावरणीयादीनामिति, तत्तदंशाभोगेन देशव्यापका मत्याद्य केवलं तु स्वभावेनेति तत्र चोपयोगशब्दो नाभोगपूर्वकोपयोगवाचकः किन्तूपमार्थे न उपयोग स्वोपयोग इति, ततश्च नोपयोगे स्वभावो न च स्वभावे उपयोग इति क्षायिकक्षायोपशमिकव्यवस्था प्राप्यतमेवेति ॥

प्र० १०५३–ननु तत कथं इत्येवावगता गतार्थत्व किमिति तत्कृत कथाविभाग' इति? चेत् ॥

उ०–सत्यं, सूत्रोक्तवतिधर्मप्रमाणेन हेयो सुखादिहेतुतया च लोकानुभावावारो व्याप्तिरूपाणामिति तत्कृत

इत्यनेन ज्ञाप्यते नैकरूपेण स इति च कालविभाग इत्यनेन ज्ञाप्यते, किञ्च–ये कालस्य द्रव्यतामभ्युपगच्छन्ति तेषां मतेन चारात् कालविभागस्य ज्ञापनमेव वैकल्पिकं, कालस्य द्रव्यत्वं तु द्रव्यलक्षणसूत्रानन्तरं 'कालश्चेत्येके' इति सूत्रेण स्पष्टमेव ॥

प्र० १०५४ – ननु विंशतौ स्थानकेषु जिननामहेतुतया वर्ण्यमानेषु ये परमेष्ठिपदेषु पञ्चसु नमस्कार्यतया सिद्धान्तार्पकत्वेन सिद्धा उपाध्यायास्ते कथ नोच्यन्ते ? इति चेत् ।

उ०–सत्यं, तत्र हि चतुर्थ गुरुपद यत्तत्रैवोपाध्यायानां समावेशाद्, यत आहुर्भाष्यकारा–'धम्मोवदेसदिक्खावओवदेसदिसवायगा गुरवो । पत्थेव उवज्झाओ गहिओ सुयवायणायरिओ' ॥ १ ॥ त्तिवचनाच्चास्मात् धर्माचार्य प्रव्राजकाचार्य उपस्थापनाचार्य श्रुतोद्देशकाचार्यो दिगाचार्य इति यथा पचाचार्या लभ्यन्ते गुरुपदे तथोपाध्यायोऽपि श्रुतोद्देशकत्वादिना लभ्यत एवेति पृथग्नोक्त, अत एव च सूत्रेषु बहुधा आचार्योपाध्यायमित्येकवद्भावेन कथ्यते इति चतुर्थे गुरुपदे आचार्यवदुपाध्यायोऽप्युक्त एवेति॥

प्र० १०५५–ननु 'अरिहंतेसु य राओ, राओ साहूसु बंभयारीसु । एस पसत्थो राओ'त्युद्घुष्यते, पर स कतिविध इति तु नोच्यते, तत स राग' किंविध इति ? चेत् ।

उ०–भक्तपरिज्ञायां श्रीजिनशासने रागकरणमुपदिशद्भि पूज्यै भावानुरागः प्रेमानुराग सुगुणानुरागः धर्मानुराग इत्येतेषां रागाणां चतुर्णां करणमुपदिष्टमिति, श्रीअर्हदादिष्वप्येतेषां रागाणां करणं प्रशस्तरागतयाऽत्रसेयमिति, सर्वोऽप्ययोऽत्रानुरागभेदेऽवतारणीयो, विंशतौ स्थानकेषु वात्सल्यस्यात्र स्थानतयोल्लेखात्, वात्सल्य चानुरागसद्गुणोत्कीर्तनप्रमोदोपचारयोगैः पञ्चधोच्यते इति ॥

प्र० १०५६–ननु रूपिण पुद्गला इत्यत्रोभयावधारणेन पुद्गला रूपिण एवेति रूपरसगन्धस्पर्शत्वनियतमेव च रूपित्वमित्याख्याने च रूपरसगन्धस्पर्शयुक्ता पुद्गला इति गतार्थं तत्किमर्थं तदिति ? चेत् ।

उ०–प्राक् तावत् रूपादिमत्त्वं रूपित्व भाष्यकृद्दर्शितं परिभाषिकं च, शाब्दस्त्वर्थ' नीलादिरूपत्वं प्राकरणिकश्चार्थे नारूपा धर्माद्यस्तिकायवद् पुद्गला इति चतुर्णां सर्वपुद्गलानुगतत्वाय रूपादीनामुपकारदर्शनाय च पृथग्विपर्यैरिति योग्यमेव 'स्पर्श'त्यादिसूत्रमिति ॥

प्र० १०५७–ननु 'नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्ष-

प्रेक्ष्य 'त समासओ दुविह'मित्याद्युपक्रान्त, अत एवेन्द्रियप्रत्यक्षस्याप्रधानस्यैकान्तिकपूर्वानिश्चयरूपलक्षणशून्यस्यापि तद्विपरीतरूपान्नोइन्द्रियप्रत्यक्षात्प्राग्निर्देश उपपद्यते, लोकाना नोइन्द्रियप्रत्यक्षाणि त्रीण्यपि व्यवहारगोचराणि न चानुभवास्पदानि किन्तु तथाविधश्रद्धेयाभिमतपुरुषप्रत्ययप्रत्येयानीति, सत्यप्येवविधे स्पष्टे ऊहनीये विचारे श्रोत्रेन्द्रियादिजन्यज्ञानानामादौ विभागे नैव प्रत्यक्षताऽभिहिता पर श्रुताश्रुतनिश्रिततया अवग्रहादितया चेन्द्रियानिन्द्रियज्ञानानां भेदा' परोक्षे आभिनिबोधिके अभिहितास्तत्किमिद विसस्थुल पूर्वापरविरुद्ध चोपदेशनमिति ? चेत् ।

उ० – सत्यं, आचार्या अत्र व्यावहारिकतयेन्द्रियज्ञानानां प्रत्यक्षता नैश्चयिकी तु परोक्षतेति विभक्तवाद कथयन्ति, परमिन्द्रियप्रत्यक्षे नोपात्तं मन न च श्रुताश्रुतावग्रहादिवैशिष्ट्य, ततोऽवगम्यते यद् पुष्टमनोरहितानां यन्मनसो निरपेक्ष तद्धीनं वा यत् श्रोत्रेन्द्रियादिजन्य ज्ञान तदत्र ग्राह्यं, परत्र त्वाभिनिबोधिकशब्देन विशेषणात् सम्यग्दृशामिन्द्रियादिजमश्रुतश्रुतादिभेदं च ज्ञानं वस्तुगत्या ग्राह्यमित्यपि केचित् ॥

प्र० १०६२–ननु भगवत ऋषभदेवस्य जन्मकाले देवेन्द्रा सुरगिरौ महोत्सवं कुर्वन्ति, सनातनश्चैषामेव आचार अतीतानागतवर्त्तमानकालीनानां शक्राणां, पर मनुष्याणां तदा यौगलिकत्वाद् व्यवहारस्य लौकिकस्याप्रवृत्तेस्तन्महसोऽज्ञानात् महोत्सवकृतिर्जाता न वेति ? चेत् ।

उ०–तुट्ठेहिं मिहुणगेहि कयजम्ममहूसवो'त्ति श्रीआदीश्वरजन्मकल्याणकस्तववचनाद् मिथुनकैरपि महोत्सव आदिभगवतो जन्मन कृत एवेति ज्ञायते, कश्चित्कश्चिद् व्यवहारश्च श्रीविमलवाहनात् कुलकरादनुप्रवृत्त एव, हाकारादिनीतीना प्रवृत्तेरित्युचितमेव तज्जन्मकरणवचनमिति, नृपकल्पो नाभिरपि कुलकर इति ॥

प्र० १०६३–ननु जिनपतितिप्रभृतीनां कल्याणकादिषु सुगन्धाम्बुवर्षा क्रियते सा किं मानेति ? चेत् ।

उ०–श्रीसोमसुन्दरसूरिभिः कल्याणकस्तवे चेलक्नोपमा साऽऽख्यातेति वस्त्रार्द्रीकरणमाना सा ज्ञायते इति ॥

प्र० १०६४–ननु भगवता सिद्धानां 'औपशमिकादिभव्यत्वाभावाच्चान्यत्र सम्यक्त्वकेवलज्ञानदर्शनसिद्धत्वेभ्य' इतितत्त्वार्थवचनात् ज्ञानादीनां क्षायिकभावत्वाच्च ज्ञानदर्शनादीनि भवेयु,

'सिद्धाण सुहो रासी' इत्यादि चोच्यते ॥

प्र० १०६५–ननु ये केवलिन समुद्घातं कुर्वन्ति ते कदा तु कुर्वन्ति ? प्रागावश्यकात् पश्चाद्वेति चेत् ।

प्र० उ०–मोक्षप्राप्ते प्रागन्तर्मुहूर्त्तायुष्का एव केवलिन समुद्घात कुर्वन्ति, नवरमावश्यककरणेनायोगिगुणे क्षीयमाणानां कर्मणां श्रेणिकरणमावश्यककरणेन क्रियते, कृते च तत्र ये आयुष समधिकतरा वेदनीयादिपुद्गला न क्षेप्स्यमाणकर्मश्रेणौ समेतास्तेषां घातायैव समुद्घातस्य कृतिरावश्यकीति निश्चीयते यदुतान्तर्मुहूर्तावशेषायुष्का एव केवलिन समुद्घातं कुर्वन्ति । केषांचिद्भवेन् मत यत्षण्मासावशेषे आयुषि समुद्घातं समारचन्ति केवलिनस्ते केवलज्ञानस्योत्पत्तेरवसरे समुद्घातस्यावश्यकेतरताविचारेण भ्रान्ता, अत खण्डितमेतत् षण्मासावशेषे आयुषि समुद्घातवादिनां मतं स्पष्टैरेवाक्षरै श्रीविशेषावश्यकादाविति ॥

प्र० १०६६–ननु के केवलिन समुद्घातं कुर्वन्ति अर्वाक् षण्मासायुषि लब्धकेवला अन्ये वा ? केषा च केवलिनां नियमाद् समुद्घातो भवतीति चेत् ।

उ०–श्रृणु, येषां भगवतां केवलिनां अन्तर्मुहूर्तादारभ्य आषड्भ्यो मासेभ्य आयुर्भवति ते नियमात् समुद्घातं कुर्वन्तीति, भगवद्भिरावश्यकचूर्णिकारै 'येऽन्तर्मुहूर्त्तमादि कृत्वा आमासेभ्य षड्भ्य आयुषोऽवशिष्टेभ्य अभ्यन्तरं आविर्भूतकेवलज्ञानपर्याया ते नियमात् समुद्घात कुर्वन्ती'ति सिद्धान्तितमेभिरक्षरैरेतत्, न च वाच्य तर्हि 'य षण्मासाधिकायुष्को, लभते केवलोद्गमं । करोत्यसौ समुद्घातमन्ये कुर्वन्ति वा न वे' ॥ १ ॥ तिगुणस्थानक्रमारोहगतं वचनं 'छम्मासाऊसेसे उप्पन्नं जेसि केवल नाणं। ते नियमसमुग्घाय' त्ति,वचनं कथ नेयमिति, प्राक् तावत् चूर्णिकाराणां प्राबल्यादिदं द्वयमप्यवमन्तव्यमेव बुद्धिमता, षण्मासावशेषे आयुष्यवशिष्यमाणे समुद्घातो भवतीतिवचनवत् यद्वा गाथाया 'सेसे'त्यस्य सम्बद्ध इति कार्योऽर्थ, तथा च तावन्मात्रायुष एव नियमसमुद्घाता इत्यर्थः सम्पद्यते, शेषाश्चाधिकायुष्कास्तिष्ठन्ति, अर्वाक्तनोऽन्तर्मुहूर्त्तरूपोऽवधिस्त्वर्थाद् गम्य इति, क्रमारोहवचनं तु षड्भिर्मासैरधिक षण्मासाधिक, तावन्मानमायुष्कमस्य स षण्मासाधिकायुष्क,

...मितत् मनूच्यते ?, एत. मचित्कस्य धनदेवपुत्रस्य दीक्षाकाले ...गहण्ययांग त्रिपञ्चाशद्वर्षमानः मौर्यपुत्रस्य तु स पञ्चषष्टिमान ...ति, स्पष्ट चैषा पर्यायव्याख्या आवश्यकनिर्युक्तिचूर्णिवृत्त्या- ...दृष्टिरिति चेत् ।

उ०—सत्य, सदृशाभिधानत्वान्माभ्यां निर्युक्तौ सहचारि- ...गा नैकत्रैवाभिधान द्वयो षष्टमाभ्योनिर्देशि तन्मूलोऽयं भ्रम ...ति निश्रीयते, एत न मौर्यपुत्रस्य पञ्चषष्टिवर्षमानत्वेन सर्वम- ...भिगम्यमिति. चूर्णौ तु वीरदेवीत्यभिधानमस्तीति, न च मृते ...परणस्य गन्धोऽपीति ॥

प्र० १०६९—ननु 'सिद्धाणोगाहणा भणिये'ति कथमुच्यते ? ...त अवगाहन्ते-अवष्टभ्नन्ति कर्मवशवर्तिनः प्राणिनोऽस्यामित्य- ...गाहनेत्यस्यार्थमाश्रित्य शरीरमेवावगाहनाशब्देनोच्यते, सिद्धानां ...न शरीरं नैकमपि, सर्वशरीरविप्रहीणत्वात्तेषामिति चेत् ।

उ०— सत्य, नास्त्येव सिद्धानां शरीरं परं नावगाहनाया- ...शरीरमेवार्थः, धर्माधर्मादीन्यरूपिद्रव्याण्यपि प्रतीत्य 'लोकाकाशे- ...वगाढ' इत्यादीनां शतशो वाक्यानां दर्शनात्, अवगाहतेऽस्या- ...तात्त्विकेन विग्रहेण सिद्धानामवस्थानमेव ह्यवगाहना शब्दवाच्य इति, किञ्चान्त्यभवनिर्वर्त्तितशरीरस्थेन शैलेश्या अभ्युपगमात् घनरूपताधिपतेश्चान्त्यशरीरावगाहना त्रिभागोना- वगाहना सिद्धानां तावत्स्वाकाशप्रदेशेष्ववस्थानमिति ॥

प्र० १०७०—ननु जीवानामरूपत्वात्तदवगाहना कथ ? सत्यां च तस्यां किंकृता सेति ? चेत् ।

उ०—सत्य, जीवाः स्वरूपतो रूपवत्त्वाद्यभावादरूपा, परं संसारिणो जीवा अनादित प्रवाहेण तैजसकार्मणवन्त, तदभेदेन च तैजसकार्मणानीति संसारिणस्तदपेक्षया रूपिण इति, न च रूपिणामेवावगाहना भवति, अरूपाणामपि धर्मादिद्रव्याणां लोकाव- गाहत्वात् लोकालोकाकाशयोरप्यवस्थानाकारेण सावगाहत्वात्परं स तैजसकार्मणत्वेऽपि न तदाश्रितोऽवगाह किन्तु भवमाश्रित्य गृहीतयो- रौदारिकवैक्रियोराकारेणैव तद्वृत्तिजीवानामवगाह, अत एवा- न्तरालगतौ जीवानां पूर्वभवदेहमानोऽवगाह, एतच्च सूक्ष्मपन- कजीवत्रिसामयिकमानाया अवधे प्रमाणस्य निरूपणेऽवगाह- नाया ग्रहणात् स्पष्टमेव, तथा च यावद् गत्यन्तरं गत्वा नोत्प- द्यते न च शरीरं बन्धयितुमारभते जीवस्तावत्पूर्वभवदेहाव- गाहन इति प्रतिपत्तव्यमिति, अत एव शास्त्रेषु तत्तद्गतिजा-

स्थायामितानां जीवानां वैक्रियकार्मणशरीरयोरवगाहना पूर्वभवशरीरमाना भवत्यनाहारावस्थायामुपलेति ॥

प्र० १०७१–ननु सिद्धानां पुद्गलानामभावात् किमाधारावगाहनेति ? चेत् ।

उ०–सत्य, सर्वेषां संसारिणां यावद् भाविनि भवे शरीरं न गृह्णाति तावत्पूर्वभवशरीरमानैवावगाहनाऽऽयामपरिणामा भवति, तत इहापि सिद्धानां भगवतां भव्यशरीरस्याग्रहणेऽपि पूर्वभवशरीरमानैवावगाहना मुक्तियुक्ता तृतीयभागोनत्वं तु प्रागेव निष्कम्पनात् प्राप्स्यशरीरस्य शुषिरपूरणेनैव जात, अत एव सिद्धानामित्याख्यात भशरीरा जीवघना इति ॥

प्र० १०७२–ननु यदा केवलिनः केवलिसमुद्घाते लोकस्य पूरणं कुर्वन्ति तदा तु लोकाकाशप्रदेशेषु प्रतिप्रदेशमात्मप्रदेशाभावकल्पना स्यात्, लोकाकाशात्मप्रदेशयोस्तुल्यमानत्वात्परं कदाचिन्न्यूनाधिक्य भवति यदा प्रतिप्रदेशमाकाशस्यात्मप्रदेशानां निवेशः स्यादिति चेत् ।

उ०–समुद्घातं कुर्वन्तः केवलिनः आद्यसमय एव दण्डकरणकाले स्वात्मनोऽष्टौ रुचकप्रदेशान् लोकमध्यगतमध्यरुचकस्याष्टसु प्रदेशेषु स्थापयन्ति, यावच्च समुद्घातं तावत्ते प्रदेशास्तेष्वष्टसु प्रदेशेषु धारयन्तीति समुद्घातकालमानमवस्थानं तेषां तेष्विति ॥

प्र० १०७३ ननु भगवतां स्वलक्षणं वीतरागसर्वज्ञत्वमुक्तजिननामोदयजातप्रातिहार्यचतुस्त्रिंशदतिशयतीर्थदेशनतस्त्यागमयवर्णनसिद्धिपर्यवसानमथवाऽऽवश्यकनियुक्त्यादिनोऽपसीयते परं क्षीणमोहगुणस्थानमध्यगतदोषरहितस्य चेत्यादि प्रकल्पमाप्य लक्षणं कथमर्हतां सङ्गच्छते ? सामान्यवीतरागाणामपि तथात्वसत्त्वादिति चेत् ।

उ०–सत्य परं यथा जगति अनुवृत्त्यावृत्तिभेदेनान्यव्यवच्छेदेन च लक्षणस्य द्वैविध्यं कथ्यते तथाऽत्राप्ययोगव्यवच्छेदेनान्ययोगव्यवच्छेदेन च भगवतामर्हतामन्येषां तीर्थानां परीक्षार्थं लक्षणं विधीयते, तत्रायोगव्यवच्छेदविचारे वीतरागत्वादिनाप्युक्तं तत्तु यथायोग्यत्वेन उपयुज्यते अन्ययोगव्यवच्छेदे तु क्षीणकषायमोहादिभीराहित्यमष्टादशदोषवर्जितत्वं चेत् पुनरुपयुज्यते कुतोऽयमेतल्लक्षणस्यान्यस्य वा सम्भवात्, एव चार्हतामपि वीतरागाणामेतल्लक्षणलक्ष्ये जातिप्रातिशयः, क्वचित् व्याप्यमाप्येतद् ग्रंथ पाठ्यते, तत्त्वतः क्षीणमो-

दिभिरदेवतेति ध्वन्यते न हि तद्रहिता देवा इति लक्ष्यते किन्तु तद्वन्तो देवत्वरहिता इति सामान्यानां तद्वत्त्वे न दुष्ठ लक्षणमिति, नहि अवीतरागा सर्वं एवद्विधा इति निश्चीयते किन्त्वेतद्विधा अवीतरागा इति, अनुष्णा सर्वा आप इति न किन्तूष्णा आपो नेति, अत एव 'ते देवाः स्युर्न मुक्तये' इत्युच्यते इति ॥

प्र० १०७४–ननु भगवतां सिद्धानां परमेष्ठिनामस्ति लक्षणमिति ? चेद् ।

उ०–अस्त्येव, सितानामष्टानां कर्मणां धमनात् सिद्धा इति द्रव्यसिद्धादिव्यवच्छेदार्थं सिद्धानां लक्षण, सिद्धत्वे तु 'असरीरा जीवघणे'त्यादि, यतस्तत्रोच्यते 'सिद्धाण लक्खण एय'ति, अन्यैरपि 'अशरीरं वा वसन्त'मित्यादिना स्वीक्रियत एवाशरीरित्वं सिद्धानां लक्षणतयेति, नवरं न कोऽपि ससारी जीवोऽस्ति य शरीरवर्जित स्यात्, भवप्रत्ययिकौदारिकादेर्विरहेऽपि तैजसकार्मणयोरनादिसहितत्वान्नाशरीरः कोऽपि ससारीति, तथा 'जीवघणे'ति संसारिण. सर्वेऽप्यसुमन्त शरीरनामकर्मणा सहांगोपांगेन्द्रियनिर्माणादिकर्मयुक्ता', ततश्च तेषां नैव भवति संसारिणां जीवघनत्व न चाङ्गोपाङ्गादिकर्मवर्जितास्ते इति, जीवघना, प्राकृतत्वादेवमन्यथा घनजीवा इति, भगवतां केवलिनां सयोगिताया अन्त्ये भागे सूक्ष्मक्रियाप्रतिपातिध्यानावसरे कर्मनिर्वर्तितानां मुखश्रवणशिरउदरादिगतानां शुषिराणामापूरण भवति, आनप्राणरोधमपि पश्चाद् आरभ्य पूरयन्ति, तदवस्थ एव चात्माऽयोगितायां सिद्धत्वे च भवतीति सुष्ठुक्तं घनजीवा इति सिद्धानामेव लक्षणमिति ॥

प्र० १०७५–ननु सूक्ष्माणां निगोदानां याऽवगाहना जघन्या सा कनिष्ठतरा अगुलासंख्यभागमाना भवति, तस्यामवगाहमानास्ते घनजीवा न भवन्तीति ? चेत्।

उ०–न सिद्धान् विहाय शरीराङ्गोपाङ्गादिकर्महीना संसारिण इति न सूक्ष्मापर्याप्तनिगोदा अपि घनजीवा इति सिद्धानामेव लक्षण घनजीवत्वमिति ॥

प्र० १०७६–ननु केषाञ्चित्केवलिनां सिद्धत्वसमयेऽप्यसातस्योदयो भवति, तत. किं ते तदा दुःखं वेदयन्तो दुःखिनो भवन्तीति चेत्।

श्रिततत्त्वस्य योजनं न कल्पनाशिल्पिनिर्मितं, एवं सति माध्यस्थ्यकल्पानामज्ञानिनां ज्ञानिनिश्रिताज्ञानानां संक्षेपरुच्यादीनां शासनप्रत्यनीकत्वापातादिति गाथाया व्याख्याने च यथा यथा समये पेद्मर्येण शास्त्रादीनां मोक्षहेतुत्वमनादृत्य निर्जरां त्यक्त्वा तत्प्रतिकूले गौरवे प्रवृत्तिमादधानोऽविनिश्चितसमयो भवति तथा तथा बहुश्रुतत्वादिभिः तस्य विराधकत्वं भवति, भवति च तत शासनफलात् मोक्षमार्गात् प्रतिकूलप्रयायित्वेन विराधक इति, तथा च यथा यथा गौरववृद्धिस्तथा तथा संसारवर्धकत्वमिति फलितोऽर्थ इति ॥

प्र० १०८४–ननु 'धरइ कडिपट्टयमकज्जं' इति पार्श्वस्थलक्षणतया कथं योज्यते ? चोलपट्टस्य स्थविरकल्पेऽवश्यं धारणादिति चेत् ॥

उ० – सत्यं, शास्त्रनीत्या स्थविरकल्पिकानां चोलपट्टस्य धरणमनुज्ञातमेव, परं कोणिद्वयेन धरणं तस्यानुज्ञातं, बंधनस्य तु तस्य पार्श्वस्थलक्षणत्वं, दवरकबन्धस्त्वार्यरक्षितपितुरनन्तरं प्रवृत्त, विजनवासे त्वप्रावरणाभिग्रहे न धारयेत् तं कोणिभ्यामपि परं तत्रापि सागारिकस्यागमे गृह्णीयादेव तं, तत एवाप्रावरणाभिग्रहे चोलपट्टधारणस्याकार कथ्यते इति ॥

प्र० १०८५ – ननु ' जो जहवायं न कुणइ, मिच्छादिट्ठी तओ को अन्नो'त्ति पठ्यते बहुषु स्थानेषु, शासने च जैनेन्द्रे सिद्धत्ववीतरागत्वांता देशना सर्वापि, तत्कथं तद्देशनाकारिणां सरागाणां यथावादकारिता स्यात् ? कथं च ते सम्यग्दृष्टयः स्युरिति ? चेत् ।

उ०–सत्यं, वादिनाऽत्र प्रतिज्ञाकारितारूपा ग्राह्या, न च तत्रापि प्रमत्ततायामनथाकारित्वं, प्रमादादीनां सावद्यानामपरिहारादिति, हिंसादिपञ्चकरूपस्य सावद्यस्य प्रत्याख्यानात् महाव्रतरूपविभागातिरिक्तत्वात् सामायिकस्येति हेतोः, तत्त्वतस्तु ये निषिद्धमपि श्रावकाणां देशविरतत्वात् सर्वसामायिकोच्चारो न भवतीति वचनेन कदाग्रहवशात् सव्वं सावज्जं पच्चक्खामी'त्येवमेव प्रत्याख्याति न च तथापालनं तु कदापि कुर्वन्ति तानाश्रित्यैषा गाथा, तादृशानन्यानपि स्याद् लगनीयैव न तु प्रमत्ताद्यासु दशास्विति ॥

प्र० १०८६–ननु 'आणं च अइक्कंतो'त्ति, 'आणाखंडणकारी'त्यादि च प्रोच्याज्ञाविराधकानां शेषानुष्ठानानां वैयर्थ्यं

उ० सत्यं, अयोग्यसमयेऽपि केवलिकेवलिनां अस्य सातोदयः, परमसमस्तभावित्सुखपूर्णानां तेषां स तदुदयो न दुःखकारको भवति, क्षीरपूर्णे घटे यथा विषोऽपि निम्बरस बिन्दुर्न स्वकटुकतां दर्शयितुं समर्थो भवति तथाऽसातोदयजं दुःखं न विपाकं भावं प्रभवतीति ॥

प्र० १०७७ ननु सिद्धानां श्रीमाबरमभवदेहत्रिभागोनावगाहना कथं भवति सयोगितायामयोगितायां वेति ? चेत्।

उ०—शुक्लध्यानस्य तृतीयो भेदः सयोगितायाः अवसाने एव भवति, तत्रैव च केवलिनः मुखजठरोदरादिपूरणेन त्रिभागोनावगाहनास्तो भवन्ति, त्रिभागोनावगाहनाभवनानन्तरमेवात्मप्रदेशनिरोधो भवति, तत्करणानन्तरं चायोगी भवति, तत्र च समुच्छिन्नक्रियमेव शुक्लध्यानतुरीयभेदरूपं ध्यानमिति ॥

प्र० १०७८—ननु अशरीरत्वं घनजीवत्वं च यथा सिद्धानां लक्षणतया प्रोच्यते तथा 'उवउत्ता दंसण नाणे' सेऽस्यापि तस्यामेव गाथायां लक्षणतया प्रोच्यते तत्कथं घटते ? अत्र प्राक् तारतम्येऽपि जीवा ज्ञाने दर्शने सोपयोगवन्त एव जीवानामुपयोगलक्षणत्वात् ज्ञानदर्शनयोरेव चोपयोगभेदत्वादिति, सिद्धिशयनात् प्रकरणाच्च केवलज्ञानदर्शनयोर्भेदेऽपि सामान्यकेवलिनां तयोर्भावाच्च सिद्धत्वे तयोः सद्भावे विचार इति चेत्।

उ०—सत्यं, संसारिणः सर्वेऽपि येऽकेवलिनस्ते सर्वे आत्मीयावृत्तिकोपयोगाः, भगवन्तः सिद्धास्तु सामयिकोपयोगाः, तथा च प्रतिसमयं ज्ञाने दर्शने चोपयुक्ता इत्यर्थः, सिद्धदशायामपि केवलं तदवस्थमेव, न तु वीर्यान्तरवद् भवस्थकालस्य च्छेदेन सिद्धावस्था इति वाच्यमायोक्तत्वादस्य न केवलिषु सत्त्वेऽप्यस्य विरोध इति, किन्तु—केवलिनां भवस्थता न शाश्वती सिद्धत्वं तु शाश्वतमिति कृत्वा दर्शने ज्ञाने च शाश्वतमनुसमयमुपयुक्ता इति पर्यवसाने नातिव्याप्तिः स्यात्सुस्पष्टमिति ॥

प्र० १०७९—ननु इन्द्रियभेदेषूपयोगस्येन्द्रियत्वात् ते भुजादिषु चोपयुक्त उपलब्धिपूर्वकः आभोगोऽस्तीति उपयोगस्य सत्ता स्वीक्रियते, एवं भगवतां केवलिनामतीन्द्रियत्वाभोपयोगेन्द्रियोपयुक्तता, न च छाद्मस्थिकज्ञानातीतत्वात्गुणस्थानस्य भावत्वाच्चोपलब्धिपूर्वक आभोगोऽस्ति येन तदाश्रितोपयुक्तता कथ्यते तदा केवलिनामुपयोगोऽभ्युपयो न वा ? अस्तु येषामत्र [illegible] इति ? चेत्।

उ०-सत्यं, प्राक् तावत् शास्त्रे साकारोऽष्टधा अनाकारश्च चतुर्धोपयोग कथ्यते इति, केवलिनामपि केवले ज्ञाने दर्शने चोपयोगोऽस्त्येव, अन्यत्रासर्वज्ञानामुपलिप्सुतापूर्वकमुपयोगमुपलभ्य, चेत् तादृशमेवोपयोगमभ्युपेयस्तदा उपयोग इवोपयोग इति केवलज्ञानदर्शनोपयोगयोरिवाव्ययमध्याहार्य वाच्यमिति ॥

प्र० १०८०-ननु अनुसामयिक उपयोगो ज्ञाने दर्शने च भवति य शाश्वत उपयोगो भवति स सिद्धानां केवलस्यैवेति, तस्मिन्नुक्ते किमिति भगवतां सिद्धानां लक्षणे 'सागारमणगार'मित्युक्त्वा साकारानाकारोपयोग सिद्धानां लक्षणतया न्यस्यते? इति चेत्।

उ० -शृणु, केवलिनामुपलिप्सुतापूर्वकाभोगस्याभावे न साभिप्रायमुपयोजन, तथा चोपचरित उपयोगशब्द इति तमपेक्ष्य सिद्धानां ज्ञानदर्शनोपयुक्तता ख्याता, तत साक्षात् ज्ञानदर्शनगुणसद्भावाय साकारानाकारोद्यतत्वं सिद्धानां लक्षणतयोच्यमान सगतमेवेति, तथा चाशरीरादीनि चत्वार्यपि भगवतां सिद्धानां स्वतन्त्रलक्षणानीति ॥

प्र० १०८१-ननु समुद्घातात् कियता कालेनावर्जीकरण तस्माच्च बादरवाग्योगबादरमनोयोगबादरकाययोगरोधश्वासोच्छ्वासानां यावत् सर्वथाऽयोगेन शैलेशीस्वीकारस्य कियान् कियान् कालोऽन्तरे भवतीति ? चेत्।

उ०-सर्वत्रापि प्रत्येकमन्तर्मुहूर्त्तमन्तरमवसेयमिति श्रीआवश्यकचूर्णिवचनाज्ज्ञायते ॥

प्र० १०८२-ननु सर्वेऽपि जीवाः प्रतिक्षणं सप्ताष्टकर्मबन्धका सामान्येन योगकषायादिवत्त्वेन भवन्त्येव, तर्हि किमित्याधाकर्मभोगप्राणातिपातादिभिस्तथाविधानां सप्ताष्टविधानां कर्मबन्धं निदर्श्य भयंकरतायास्तेषां तेषां कार्याणां निदर्शनं क्रियते, सामान्यत्वात् तद्बन्धस्य, तदन्तरेणापि भावादिति? चेत्।

उ०-सत्यं, प्राक् तावत् मिथ्यात्वाविरतिमन्त सर्वेऽपि जीवा विशेषप्रवृत्तिमन्तरेणापि केवलात् मिथ्यात्वादे' सप्ताष्टमूलप्रकृतीनां बन्धका सन्त्येव, तत्प्रभावाच्च पृथ्व्यादयो जीवा संसारे आजवंजवीभावं कुर्वन्ति अनुभवन्ति च अष्टकर्मप्रकृती' सतत परं विशेषेण क्रियासु आधाकर्मभोगादिषु च प्रवृत्तानां इन्द्रियजप्रमादकषाययोगानां तीव्रत्वं भवति, ततस्तासां कर्मप्रकृतीनां बन्धोऽपि तीव्रतमो भवत्येवेति, किञ्च-यथा तासां

श्रिततत्त्वस्य योजनं न कल्पनाशिल्पिनिर्मितं, एवं सति मारुप-कल्पानामज्ञानिनां ज्ञानिनिश्रिताज्ञानानां संक्षेपरुच्यादीनां शासन-प्रत्यनीकत्वापातादिति गाथाया व्याख्याने च यथा यथा समये पेदम्पर्येण शास्त्रादीना मोक्षहेतुत्वमनादृत्य निर्जरां त्यक्त्वा तत्प्रतिकूले गौरवे प्रवृत्तिमादधानोऽविनिश्चितसमयो भवति तथा तथा वहुश्रुतत्वादिभिः तस्य विराधकत्वं भवति, भवति च तत शासनफलात् मोक्षमार्गात् प्रतिकूलप्रयायित्वेन विराधक इति, तथा च यथा यथा गौरववृद्धिस्तथा तथा संसारवर्धकत्वमिति फलितोऽर्थ इति ॥

प्र० १०८४–ननु 'वंभइ कडिपट्टयमकज्जं' इति पार्श्वस्थ-लक्षणतया कथ योज्यते ? चोलपट्टस्य स्थविरकल्पेऽवश्य धारणादिति चेत् ॥

उ० – सत्य, शास्त्रनीत्या स्थविरकल्पिकानां चोलपट्टस्य धरणमनुज्ञातमेव, पर कोणिद्वयेन धरणं तस्यानुज्ञात, वंधनस्य तु तस्य पार्श्वस्थलक्षणत्वं, दवरकवन्धस्त्वार्यरक्षितपितुरनन्तरं प्रवृत्त, विजनवासे त्वप्रावरणाभिग्रहे न धारयेत् त कोणिभ्या-मपि परं तत्रापि सागारिकस्यागमे गृह्णीयादेव त, तत एवा-प्रावरणाभिग्रहे चोलपट्टधारणस्याकार कथ्यते इति ॥

प्र० १०८५ – ननु 'जो जहवायं न कुणइ, मिच्छादिट्ठी तओ को अन्नो'त्ति पठ्यते वहुषु स्थानेषु, शासने च जैनेन्द्रे सिद्धत्ववीतरागत्वाता देशना सर्वापि, तत्कथ तद्देशनाकारिणां सरागाणां यथावादकारिता स्यात् ? कथं च ते सम्यग्दृष्टय' स्युरिति ? चेत् ।

उ०–सत्यं, वादिनाऽत्र प्रतिज्ञाकारितारूपा ग्राह्या, न च तत्रापि प्रमत्ततायामनथाकारित्वं, प्रमादादीना सावद्यानामपरिहारादिति, हिंसादिपञ्चकरूपस्य सावद्यस्य प्रत्याख्यानात् महाव्रतरूपविभागातिरिक्तत्वात् सामायिकस्येति हेतो', तस्यतस्तु ये निषिद्धमपि श्रावकाणां देशविरतत्वात् सर्वसामायिकोच्चारो न भवतीति वचनेन कदाग्रहवशात् सव्व सावज्ज पच्चक्खामी'त्येवमेव प्रत्याख्यान्ति न च तथापालन तु कदापि कुर्वन्ति तानाश्रित्यैषा गाथा, नादृशा-नन्यानपि स्याद् लगनीयैव न तु प्रमत्ताद्यासु दशास्विति ॥

प्र० १०८६–ननु 'आण च अइक्कंतो'त्ति, 'आणाखंडण-कारी'त्यादि च प्रोच्याज्ञाविराधकानां शेषानुष्ठानानां वैयर्थ्य

गीतार्थसाधूनामपि 'पकप्पजइणा कहेयव्वो'त्ति सोऽस्त्येवेति चेत्।

उ० सत्य, सत्यपि परेषां धर्मोपदेशस्याधिकारे यदाचार्यैगुणतया प्रोक्त उपदेशस्तज्ज्ञापयति – गुरुर्गच्छवर्त्तिनामुन्मार्गप्रवृत्तिरोधाय सततमुपदिश्यात् तथाऽकरणे गच्छीयसाध्वाद्यकृत्यदोषभाक्त्व तस्य, तथाच सारणादिरूपे उपदेशे गुरुभिर्नियतं सदा-वर्त्तव्यमितिज्ञापनाय तद्वच , नैव परेषा तथाऽधिकाराभावादिति॥

प्र० १०९६–ननु स्त्रीणां निर्वाणमभ्युपगच्छन्त श्वेताम्बरा किमिति 'वरिससयदिक्खियाए'त्यादिना साध्वीभिर्यथापर्याय निषेधयन्ति वन्दनमिति? चेत् ।

उ०–सत्य, वन्दन हि व्यवहार , स च मर्यादया क कस्मिन् गुणस्थाने इति ज्ञातुमशक्यत्वात् ततस्तं क्रियमाणस्य पुरुषज्येष्ठत्वमाश्रित्य च क्रियमाण साध्वीना यथापर्यायं वन्दन-निषेधो न मोक्षमार्गरोधाय, अन्यथा सर्वथावमानस्याचार्यादीना-श्रित्यापरमुनीना यथापर्याय वदनस्याभावात् किं शेषमुनीनां न केवलोत्पत्तावधिकार ? तथाप्येतत्तु सम्मतमेवावमानामप्याचार्याणां शेषसाधुभिर्वन्दनकरणमिति ॥

प्र० १०९७–ननु संविग्नपाक्षिका साधुवेषा श्रावकवेषा वा स्युरिति ? चेत् ।

उ०–'ओसण्ण चरणकरणे'ति वचनात् साधुवेषा इति, श्रावकवेषत्वे तु श्रावका एव ते, ते च द्वितीयमार्गरूपा, इमे तु तृतीयमार्गे इति ॥

प्र० १०९८–ननु सम्यग्दर्शनादीनां त्रयाणामेकतरस्याभावे मोक्षस्यासाधनता कथ्यते, परमविरतसम्यग्दृष्टेरारभ्याचतुर्दशं गुणस्थान मोक्षमार्गः तेनैव च तद्वन्त' सर्वे मार्गगामिन उच्यन्ते, तत्कथ द्वय सगमनीयमिति ? चेत् ।

उ०–प्राक् तावत् 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग' इति त्रयाणां मोक्षमार्गत्वप्रतिपादक श्रीतत्त्वार्थसूत्रं, तत्त्वार्थश्च दर्शनग्रन्थ इति केवलानां श्रद्धाऽवबोधक्रियावादिना यानि मतानि तन्निरासपर इति। गुणस्थानगत तु सम्यग्दर्शनं शमादिलक्षणांकितमिति न तदितरद्वयनिरपेक्षं तत्पूर्वक आगमाववोधोऽपि 'अप्पपि य सुयमहीयमि'त्यादिना सिद्धान्तेनाकितं, तत सम्यग्दर्शनालङ्कृत चारित्रसापेक्ष च चारित्र तु जीवादितत्त्वश्रद्धानाववोधसहकृतमेवेति आचतुर्थादाचतुर्दशं गुणस्थानं न

गीतार्थसाधूनामपि 'पकप्पजइणा कहेयव्वो'त्ति सोऽस्त्येवेति चेत्।

उ० सत्य, सत्यपि परेषां धर्मोपदेशस्याधिकारे यदाचार्ये गुणतया प्रोक्त उपदेशस्तज्ज्ञापयति – गुरुर्गच्छवर्त्तिनामुन्मार्गप्रवृत्तिरोधाय सततमुपदिश्यात् तथाऽकरणे गच्छीयसाध्वाद्यकृत्यदोषभाक्त्व तस्य, तथाच सारणादिरूपे उपदेशे गुरुभिर्नियतं सदा-वर्त्तव्यमितिज्ञापनाय तद्वचः, नैव परेषां तथाऽधिकाराभावादिति॥

प्र० १०९६–ननु स्त्रीणा निर्वाणमभ्युपगच्छन्त श्वेताम्बरा किमिति 'वरिससयदिक्खियाए'त्यादिना साध्वीभिर्यथापर्याय निषेधयन्ति वन्दनमिति? चेत् ।

उ०–सत्य, वन्दन हि व्यवहार, स च मर्यादया क कस्मिन् गुणस्थाने इति ज्ञातुमशक्यत्वात् ततस्तं क्रियमाणस्य पुरुषज्येष्ठत्वमाश्रित्य च क्रियमाण साध्वीना यथापर्यायं वन्दन-निषेधो न मोक्षमार्गरोधाय, अन्यथा सर्वथावमानप्याचार्यादीनाश्रित्यापरमुनीना यथापर्याय वदनस्याभावात् किं शेषमुनीनां न केवलोत्पत्तावधिकार ? तथाप्येतत्तु सम्मतमेवावमानामप्याचार्याणां शेषसाधुभिर्वन्दनकरणमिति ॥

प्र० १०९७–ननु संविग्नपाक्षिका साधुवेषा श्रावकवेषा वा स्युरिति ? चेत् ।

उ०–'ओसण्ण चरणकरणे'ति वचनात् साधुवेषा इति, श्रावकवेषत्वे तु श्रावका एव ते, ते च द्वितीयमार्गरूपा, इमे तु तृतीयमार्गे इति ॥

प्र० १०९८–ननु सम्यग्दर्शनादीनां त्रयाणामेकतरस्याभावे मोक्षस्यासाधनता कथ्यते, परमविरतसम्यग्दृष्टेरारभ्याचतुर्दशं गुणस्थान मोक्षमार्ग' तेनैव च तद्वन्तः सर्वे मार्गगामिन उच्यन्ते, तत्कथ द्वय सगमनीयमिति ? चेद् ।

उ०–प्राक् तावत् 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग' इति त्रयाणां मोक्षमार्गत्वप्रतिपादक श्रीतत्त्वार्थसूत्रं, तत्त्वार्थश्च दर्शनग्रन्थ इति केवलानां श्रद्धाऽवबोधक्रियावादिनां यानि मतानि तन्निरासपर इति। गुणस्थानगत तु सम्यग्दर्शन शमादिलक्षणांकितमिति न तदितरद्वयनिरपेक्षं तत्पूर्वक आगमाव-बोधोऽपि 'अप्पापि य सुयमहीयमि'त्यादिना सिद्धान्तेनांकितं, तत सम्यग्दर्शनालङ्कृत चारित्रसापेक्ष च चारित्र तु जीवादितत्त्वश्रद्धानावबोधसहकृतमेवेति आचतुर्थादाचतुर्दश गुणस्थानं न

कथ्यते पर सकामनिर्जरारूपस्तपोभेदस्तस्मात्तपस फलं च कुत्रापि कथ्यते न वा ? नेति चेत् तत्र को हेतुरिति ? चेत्।

उ०-सत्यं, सवरवतमेव सम्यग्दृशां निर्जरायास्तत्त्वरूपेणोपदेशात् स्वन्त्रतया सकामनिर्जराया अधिकारप्राप्तत्व, अत एव च, तत्र निर्जराया भेदेषु भृगुपातादिबालाज्ञानितपो निर्जराकारणमपि नोदितं श्रीभगवतीसूत्रे च नमस्कारादीनां तपसा फल च श्रमणनिर्ग्रन्थानाश्रित्यैव चोदित, देशविरताना; तु तप फल साक्षादनुक्तमपि 'सीलव्वये'त्यादिषु प्रत्याख्यानस्य गुणशीलव्रतेभ्य पृथग्भूतस्य ग्रहणा तदनुसारेण तप फल ज्ञेय। तथा च बालतपस्विनामज्ञानतपस्विनां च तपसः फलेन तेन न सम्बन्ध कश्चिदिति ॥

प्र० ११०२-ननु चारित्रहीनस्य ज्ञानस्य संयमहीनस्य तपसो यथा निरर्थकता तथा लिङ्गग्रहणस्य निरर्थकतायां किमिति दर्शनहीनस्य ग्रहण लिङ्गस्य चारित्रेण प्रतिबन्धादिति चेत् ।

उ०-सत्य, आदौ तावदेषा निरर्थकता साक्षान्मोक्षफलापेक्षया ज्ञेया, अपर शास्त्रकारै संविग्नपाक्षिकस्यापि मोक्षमार्गतयोक्तत्वात् ;तस्य व्रतैर्हीनत्वेऽपि साधुलिङ्गेनोपेतत्वात्तद्व्यपोहायात्र दर्शनहीनस्य लिङ्गग्रहणं निरर्थकमित्युक्तमिति ॥

प्र० ११०३-ननु 'जो कुणइ अपमाण गुरुवयण न य लपइ उवएस'मितिगाथायां गुरुवचनस्याप्रामाणिकताकरण उपदेशस्याग्रहणं चेति द्वय किमर्थ ? पश्चात्तापे एकस्यापि कारणत्वादिति चेत् ।

उ०-सत्यं, गुरुवचनस्याप्रमाणीकरणेन विरुद्धाचरणस्यारम्भो ज्ञाप्यते उपदेशस्याकरणमित्यनेन तु विरुद्धाचारप्रवृत्तिर्ज्ञाप्यते उभयवांश्च स्यादेव वस्तुवृत्त्या पश्चात्तापस्य पात्र तथा चाशुभकर्मोदयस्य प्राबल्याद् गुरुवचनस्याप्रमाणीकरणेन विरुद्धाचारप्रवृत्तोऽप्यंकुशेन गज इव गुरूपदेशेन विरुद्धाचारे न प्रवर्तते स रथनेमिवदुत्तमपुरुषतयाऽपि गण्यत इति स्पष्टमाम्नातमिति ॥

प्र० ११०४-ननु यथा नामकर्मणो गत्यादयोऽवान्तरभेदास्तथोच्चनीचगोत्रयोस्तद्भेदत्वमस्तु कि प्रकृत्योर्द्वयोः पार्थक्यं पृथक्कर्मता गोत्रस्येति ? चेत्।

उ०-सत्य, यथा गत्यादयस्तत्तत्प्रकृत्यनुकूलपुद्गलानामा-

तत्कथं तत्तीर्थतपस्त्वेन तद्वार्षिकं मान्यमिति ? चेत् ।

उ०–सत्य, भिक्षां भ्राम्यतो भगवतो भिक्षाया अनादानमभिग्रहाधीनं परं पर्यवसानं त्वभक्तार्थरूपं, अलब्धे तपसो वृद्धिरिति प्रसिद्धं वचोऽप्यत्रानुसन्धेयं, न चाभक्तार्थे प्रत्याख्यायमाने सूर्योदयात्प्राग्धारणादिनियम इति वर्धमाननिराहारताया वार्षिकतपस्त्वेनोक्तिर्नासङ्गतेति ॥

प्र० ११०८ – ननु श्रीप्रज्ञापनाकायस्थितिप्रकरणवृत्त्यादिवचनेन निगोदान्निर्गतानामेव व्यवहारराशिकत्वं वस्तुवृत्त्याऽस्ति परं सूक्ष्मपृथ्वीकायादयः क्व गण्यन्ते ? इति चेत् ।

उ०–तेषां जीवानां प्रत्येकत्वादयमिति व्यवहर्त्तुं शक्यत्वाद् व्यवहारिकत्वं स्यात् लोकव्यवहारापेक्षया तेषु तदभावादव्यवहारिकत्वमिति, अव्यवहारिकविभागश्च 'अत्थि अणताणता निगोयवास अणुहवंती'त्यादिविशेषणवतीवचसा स्थाप्यते, न च सूक्ष्मपृथ्व्यादीनां निगोदवासित्वं, सूक्ष्मेक्षिकया सूक्ष्मपृथ्व्यादयो वादरपृथ्व्यादिनिगोदयोरान्तरभूमिरूपा परं प्रत्येकत्वाद् वहिर्निगोदेभ्यो इति व्यवहारिकता श्रद्धापथमेवामानेतुं शक्येति ॥

प्र० ११०९ – ननु युग्मिनामसंख्यातानि वर्षाण्येवायुष्कं स्यात् इतरदपि वेति ? चेन ॥

उ० – युग्मिक्षेत्रेषु गर्भजमनुष्याणामसंख्यातवर्षायुष्काणामेवोत्पत्तिर्नेतरेषामिति ॥

प्र० १११० – ननु अकर्मभूमिगा मनुष्या मैथुनासेविनो न वेति ? चेत् ।

उ० – अकर्मभूमिगानामपि गर्भजमनुष्याणां मैथुनसंयोगादेव वीजसंक्रमस्तस्माच्च तेषां निष्पत्ति, नहि केषाञ्चिदपि गर्भजानां मैथुनस्याऽऽसेवां वीजस्य च संक्रममन्तरेणोत्पत्तिः स्यादिति॥

प्र० ११११–ननु यद्यकर्मभूमिगानां गर्भजमनुष्याणां मैथुनवीजसंक्रमद्वारैव चेद् गर्भादि तर्हि तेषां मैथुने रुनलिकान्तराय-शलाकाप्रवेशन्यायेन असंख्यातानां सम्मूर्च्छिमानां नवलक्ष्या गर्भजानां च जीवानां घातः स्यान्नवेति ? ।

उ०–तत्रापि मैथुनक्रियायां जायमानानां 'असंख इत्थीनरमेहुणाओ'त्यादिवचनादसंख्यातानां सम्मूर्च्छिममनुष्याणां तथा 'पंचिंदिया मणुस्से'त्यादिवचनाच्च नवलक्ष्या गर्भजमनुष्याणां वधोऽवश्यं भवत्येव ॥

प्र० १११२–ननु चाकर्मभूमिष्वपि मैथुनक्रियायां सम्मू-

तत्कथं तत्तीर्थतपस्त्वेन तद्वार्षिकं मान्यमिति ? चेत् ।

उ०-सत्य, भिक्षां भ्राम्यतो भगवतो भिक्षाया अनादानमभिग्रहाधीनं परं पर्यवसानं त्वभक्तार्थरूपं, अलब्धे तपसो वृद्धिरिति प्रसिद्धं वचोऽप्यत्रानुसन्धेयं, न चाभक्तार्थे प्रत्याख्यायमाने सूर्योदयात्प्राग्धारणादिनियम इति वर्धमाननिराहारताया वार्षिकतपस्त्वेनाङ्कितर्नासङ्गतेति ॥

प्र० ११०८ – ननु श्रीप्रज्ञापनाकायस्थितिप्रकरणवृत्त्यादिवचनेन निगोदान्निर्गतानामेव व्यवहारराशिकत्वं वस्तुवृत्त्याऽस्ति परं सूक्ष्मपृथ्वीकायादय क्व गण्यन्ते ? इति चेत् ।

उ०-तेषां जीवानां प्रत्येकत्वादयमिति व्यवहर्त्तुं शक्यत्वाद् व्यवहारिकत्वं स्यात् लोकव्यवहारापेक्षया तेषु तदभावादव्यवहारिकत्वमिति, अव्यवहारिकविभागश्च 'अत्थि अणताणंता निगोयवास अणुहवती'त्यादिविशेषणवतीवचसा स्थाप्यते, न च सूक्ष्मपृथ्व्यादीनां निगोदवासित्वं, सूक्ष्मेक्षिकया सूक्ष्मपृथ्व्यादयो बादरपृथ्व्यादिनिगोदयोरान्तरभूमिरूपा परं प्रत्येकत्वाद् बहिर्निगोदेभ्यो इति व्यवहारिकता श्रद्धापथमेषामानेतुं शक्येति ॥

प्र० ११०९ – ननु युग्मिनामसंख्यातानि वर्षाण्येवायुष्कं स्यात् इतरदपि वेति ? चेत् ॥

उ० – युग्मिक्षेत्रेषु गर्भजमनुष्याणामसंख्यातवर्षायुष्काणामेवोत्पत्तिर्नेतरेषामिति ॥

प्र० १११० – ननु अकर्मभूमिगा मनुष्या मैथुनासेविनो न वेति ? चेत् ।

उ० – अकर्मभूमिगानामपि गर्भजमनुष्याणां मैथुनसंयोगादेव बीजसङ्क्रमस्तस्माच्च तेषां निष्पत्तिः, नहि केषांचिदपि गर्भजाना मैथुनस्याऽऽसेवा बीजस्य च सङ्क्रममन्तरेणोत्पत्तिः स्यादिति॥

प्र० ११११–ननु यद्यकर्मभूमिगानां गर्भजमनुष्याणां मैथुनबीजसङ्क्रमद्वारैव चेद् गर्भादि तर्हि तेषां मैथुने रुतनलिकान्तताय - शलाकाप्रवेशन्यायेन असंख्यातानां सम्मूर्च्छिमानां नवलक्ष्या गर्भजाना च जीवानां घातः स्यान्नवेति ? ।

उ०-तत्रापि मैथुनक्रियायां जायमानानां 'असंखा इत्थीनरमेहुणाओ'त्यादिवचनादसंख्यातानां समूर्च्छिममनुष्याणां तथा 'पंचिंदिया मणुस्से'त्यादिवचनाच्च नवलक्ष्या गर्भजमनुष्याणां वधोऽवश्यं भवत्येव ॥

प्र० ११ १२–ननु चाकर्मभूमिष्वपि मैथुनक्रियायां सम्मू-

प्र० १११५–ननु पचसूत्रप्रकरणादिषु चतु शरणगमनादेरनन्तर सम्यक्त्वस्य प्रतिपादनादि विना कथमनुव्रतादीनां प्रतिपादनग्रहणादीति ? चेत् ।

उ०–सत्य, जैनशासने सम्यक्त्वे सत्येवानुव्रतादिग्रहणस्य न्याय्यत्व, अन्यत्र सूक्ष्मस्थूलजीवनिरूपणादेरभावात् मूलरूपाया हिंसानिवृत्तावेवानुव्रतमहाव्रततया विभागाभावान्नानुव्रतानि महाव्रतानि च सवचा सूक्ष्मवादराणा तत्तया श्रद्धाने एव भवेयुरिति, पर पचसूत्रादिप्रकरणेषु जैनाश्रितत्वेन जैनानां च तथाश्रद्धानस्य कुलाचारवत्तयाऽपि भावान्निसर्गसम्यक्त्ववतां मत्वा विवेचन कृत ज्ञायते, यद्वा चतुर्णामर्हदादीनां शरणगमने प्रागेव तत्स्वरूपस्य श्रद्धानमर्थापत्तिसिद्ध यतस्ततो लब्धसम्यक्त्वास्तदङ्गीकर्त्तार इति नासङ्गति ॥

प्र० १११६–ननु बालतपोऽप्यकामनिर्जरारूप चेत् किमित्यनेकशास्त्रेषु तत पार्थक्येनोक्तिरिति ? चेत् ।

उ०–सत्य, बालतपो हि स्वरूपसावद्यं न तथाऽकामब्रह्मचर्यादीति पार्थक्येन पठनमावश्यकमेव, बालमरणेनानन्तमरणानां यथाऽनुबन्धस्तथा नाकामनिर्जरावतामित्यप्यवश्यमूह्यमिति ॥

प्र० १११७ ननु किमिति योगशास्त्रे तपसो बाह्यत्वे कुतीर्थिकगृहस्थैश्च क्रियते इति कथ हेतुतया,न्यस्तमिति ? चेद् ।

उ०–सम्यग्दृशां सर्वदेशयतीनां सकामनिर्जराकतया स्वीकारात् , तेषा च,सर्वेषामकामनिर्जराया एव स्वीकारादिति ॥

प्र० १११८–ननु 'वेसोऽवि अप्पमाण, असंजमपहेसु वट्टमाणस्से तिवचनेन वेषस्य निरर्थकतोच्यते, 'धम्मं रक्खइ वेसो, संकइ वेसेण दिक्खिओमि अहं। उम्मग्गेण पडत, रक्खइ राया जणवओव्वे' ॥१॥ तिवचनेन च धर्मदीक्षामार्गरक्षा वेषेण कथ्यते राज्ञौपम्य च,क्रियते, इति परस्परविरोधे किं तत्त्वमिति ? चेत् ।

उ०–यथाहि करिप्रभृतीनामकुशादयो यथायथ मार्गे प्रवर्त्तका निवर्त्तकाश्चोन्मार्गादिति सत्यपि व्यवहारे उन्मत्तानां तेषां न ते तत्कार्यं कर्तुमीशा , तद्वदत्रापि यावन्मोहमदिरामत्तो न भवति तावद्वेषस्य धर्मादिरक्षकत्व भवति, गते तून्मार्गे न स रक्षक, प्रत्युत दुर्लभबोधित्वादेर्हेतुरित्युभयमपि श्रीउपदेशमालाकारोक्त यथायथमेवेति ॥

प्र० १११९–ननु श्रमणस्य भगवतो महावीरस्य मतं-क्रियमाण कृतं कृत च कृतमिति, जमालेस्तु मत–कृतमेव

दीर्घतरतां च विधत्ते विधत्त च परिवर्त्तन प्राग्बद्धानां शुभानामप्यशुभतयेति, इद चाधाकर्मप्रकरणोक्तमन्यत्रानुक्तमप्यध्यवसेयमिति॥

प्र० ११२२–श्रमणोपासकानां व्रतेषु क्वचिद्दिग्व्रतादीनां सप्तानामपि शिक्षाव्रतत्वमुच्यते क्वचिदनर्थदण्डविरमणस्य प्रकीर्णकादिषु गुणव्रतत्वमावश्यकादौ च शिक्षाव्रतत्व तथा देशावकाशिकस्यापि तथा भोगोपभोगमानस्यापि गुणशिक्षाव्रतत्वव्यत्ययो दृश्यते, तत्र को हेतुरिति ? चेत् ।

उ०–सत्य, शास्त्रीयया दृष्ट्या यथाऽणुव्रतानि यावत्कथिकानि तथा गुणव्रतान्यपि अणुव्रतानां मुत्कलसङ्कोचनेन गुणकारकत्वाद्यावत्कथिकान्येव, सामायिकादीनि च साधुचर्याया अभ्यासार्थं क्रियमाणत्वात् शिक्षाव्रतत्वेनोक्तानि तानि चेत्वरिकाणीति पर वृद्धसामाचार्यां पूर्वधरकालीनाचरणयाणुव्रतान्यपि इत्वरिकाणि भवन्ति, यथाभद्रकादीनामभ्यासाय मार्गप्रवेशाय च तथा गुणव्रतानि तेनैव हेतुनेत्वरिकाणि कार्यन्ते सामायिकादीनि च ये साधुत्वायायोग्या असहिष्णवो वा ते श्राद्धानुष्ठानत्वेनापि कुर्वन्तीति यथाऽभिप्रायं गुणव्रतत्व शिक्षाव्रतत्वं च साधयितु शक्य, किञ्च–दिक्परिमाणादीनामित्वरिकत्वं भोगोपभोगमानादीनां च यावत्कथिकत्वमपि च भवति केषाञ्चित्ततो यावत्कथिकत्वे गुणव्रतत्वमित्वरिकत्वे शिक्षाव्रतत्वं च यथायथं ज्ञेयमिति॥

प्र० ११२३–ननु अणुव्रतानि विरहय्य स्युर्दिक्परिमाणादीनीति ? चेत् ।

उ०–सामाचार्यां द्वादशानामपि व्रतानां भङ्गकरचनाकरणादिना ज्ञायते यत्-तान्यन्तरेणापि तानि स्यु, तथा च गुणव्रतत्वशिक्षाव्रतत्वे अनियते स्यातामेव, अणुव्रतानां तु महाव्रतसंज्ञापेक्षित्वात् तत्सञ्ज्ञत्वमेव, यावत्कथितत्वे इत्वरिकत्वेऽपि च सर्वकालीन्येषामेषा सञ्ज्ञेति॥

प्र० ११२४–ननु साधुधर्मसामर्थ्याय श्रावकधर्मस्याभ्यासरूपत्वात् प्राय प्रान्त्ये श्रमणोपासका साधव स्यु, उदूढप्रतिमाश्च ते श्रमणभूता एवान्त्यप्रतिमायां भवन्ति, आसन्नमृत्यवश्च सस्तारश्रमणा भवन्ति, ततो मरणं बालपण्डिततया कथ सम्भवेदिति? चेत् ।

उ०–सत्य, आशुकारं मरण स्यात् जीविताशा छिन्ना न स्यात् न कृता सलेखना न मुत्कलित कौटुम्बिकैस्तदा गृहे सस्तारकमादद्य म्रियमाण- बालपण्डितमरण- स्यादिति, तथामरणस्य

उ० – सत्य, औदारिकादितया परिणमनं सर्वलोकवर्त्तिपुद्गलानामिति क्षेत्राधिकारे स्थित्यादिषु आवर्त्त कथ्यते, तत्त्वतस्तु क्षेत्रकालभावावर्त्ता प्ररूपणमात्रं, सूक्ष्मतमत्वादनन्तरमुत्पादोऽसम्भ्यैव सम्भवस्तु द्रव्यावर्त्तानामिति योगविन्द्वादिषु द्रव्यावर्त्ता एव निर्दिष्टा अपार्धपुद्गलावर्त्ताधिकारे इति, अत एव श्रीभगवत्यामपि द्वादशे शतके औदारिकादिभेदेनैवावर्त्तभेदा ,पुद्गलावर्त्त द्रव्यत सामान्येन सर्वपुद्गलग्रहणोज्झनरूपे' इति योगबिन्दौ, तत्सख्यान च नारकैकेन्द्रियादिषु भूतान भविष्यतश्चाश्रित्येति ॥

प्र० ११३१ – ननु पनक -फुल्ली, स चानन्तकायिक तत कथमवधिप्रसङ्गे एकत्वेनोत्पाद ? कथ च 'सुहुमपणगजीवसरीरावगाहणाहितो'इत्यादि उच्यते ? इति चेत् ।

उ०–शृणु, अनन्तकायिकेष्वपि नैकस्य सहोत्पत्तिर्विरुद्धा, प्रमत्तचतुर्दशपूर्विप्रभृतीनामपि तत्रोत्पत्ते श्रवणादिति, याऽवगाहनाऽनन्ताना सैवैकस्येति तदवगाहनात्वे विरोधो नेति, भेदविशेषो वाय समाननामा स्यादिति ॥

प्र० ११३२–ननु कालस्वभावादीनि पञ्चापि कारणान्यार्हतैरनुमतानि सन्ति पर तेषु पञ्चसु गौणमुख्यभावविचारणायां स्पष्टा नियतिरेवाग्रेसरा भवति, यतो कालादयोऽनन्तशो लब्धा अपि न क्षमा शिवसाधनाय, यदा च जन्तोरवश्यं भावी मोक्षस्तदा तु कालाद्या भजन्त्येवानुकूल्यं तत्कथं समे समानानि कारणानीति ? चेत् ।

उ०–सत्यं, नियतिपरिपाककाले हि कालादयो भवन्त्येव फलदानदक्षा , न च काचित् नियतिः कालादिविरहिता मोक्षस्यावाप्तौ, प्राधान्य दृष्ट्वा नियतेर्न सर्वत्र तस्यास्तत् , कालादिप्राधान्येनापि कुमारयुवत्वसुषमासुषमादिगताना भावानां भावादिति ॥

प्र० ११३३–ननु प्राप्य मिथ्यात्वादिक्षयोपशमादेर्गुरूपदेशादेश्च केवलिप्रज्ञप्त धर्म प्रयत्यते धर्मिभिर्यावज्जीवं ज्ञानादीनामाराधनाय कालाध्ययनाद्याचारेषु पर प्रवृत्तिर्हि यावद्वीर्योल्लासं भाविनीति भवेऽत्रैव वहुधा सा जीवितान्तावसरे निवर्तते; न च सर्वेऽपि तद्वन्तोऽस्मिन्नेव जन्मनि प्रयान्ति मोक्षं, ततो ये प्रेत्य भवावतारास्तेषां तत्प्रवृत्ते कि फलं चारित्रं हैहभविक, न च सर्वेऽपि प्रेत्य जातिस्मरणवन्त श्रीवज्रस्वाम्यादिवदिति चेत्।

प्र० ११३७–ननु सर्वो भवस्थो जीव' प्रतिक्षणमष्टानां कर्मणा वेदक· कथ भवतीति ? चेत्।

उ०–शृणु, जीवितापरपर्यायमायुस्तु प्रतिभवं प्रत्येकोऽसुमान् वेदयते, तदुदयाधीन एव यतो भवः, विहाय सिद्धान् भगवतो न कश्चिदनायुष्काङ्क्षी, संसारी चातिप्रभूतवेदनीयाणुयुक्त इति पौद्गल सुखं दु ख वाऽनुक्षण वेदयति, तद्वेदयंश्च स्वरूपाच्चल आत्मा क्रोधाद्याक्रान्त· स्यात्, तस्माच्च ज्ञानघ्नादीनि कर्माणि तत्तत्कारणप्रवृत्ततया बध्नातीति सर्व सदा सप्तबन्धो जीव संसारमाश्रित इति, यस्य यस्य कर्मण सत्तोच्छिद्यते नतत्कर्म न परिणमति न च बध्यते, निर्मूलमुच्छिन्नस्य पुनर्भावासम्भवात्, अत एव नावतारो मुक्तानां भवे इति।

प्र० ११३८–ननु षट्सु पर्याप्तिषु सतीषु किमिति देवनारकाधिकारे 'पचविहाए पज्जत्तीए पज्जत्तिभाव गच्छइ'त्ति कथ्यते, भगवद्भिस्तत्त्वार्थभाष्यकारैश्च स्वमतेन भाषान्ता पचैव पर्याप्तिभेदा उक्ता, मन पर्याप्तिस्त्वेकीयमतेनेति ? चेत्।

उ०–सत्य, अत्र केचिदितरपर्याप्त्यपेक्षया देवनारकाणां भाषा-मन·पर्याप्तिसमाप्तेरन्तरस्याल्पत्व हेतुतयाऽऽचक्षते, अपरे चानिर्णीतं कारण प्रचक्षते, केचित्त्वेवं सम्भावयन्ति यदुत–देवनारका ज्ञानत्रयोपेता इति प्राग्विचार्यैव भाषां भाषन्ते, ततश्चतुर्विधैव भाषा तेषां, तथा तथा प्राक् प्रधारणतात् सञ्ज्ञिनां विशिष्टानां नरतिरश्चामपि तथा विचार्य भाषाया भाषणात्, शास्त्रेषु द्रव्यश्रुतचारित्रभाषाभेदा इष्यन्ते, इष्यते च मन्ये इत्यवधारणी भाषेति, तथाच तेषां भाषाद्रव्याणां ग्रहण मनोयोगवासितेन, तथा च भाषाया प्रवृत्ते प्रागेव मनस प्रवृत्तिरिति, व्यवहारश्च भाषाप्रधान एवेति वा या चिन्ता सा व्यज्यते, पुष्टभाषासंस्कारश्च मनोऽपि शुद्ध शुद्धतर शुद्धतम धारयतीति भाषामनसोरेकत्वमेक्ष्य प्रागुत्तरभावानियम च प्रेक्ष्य पञ्चम्येकैवाम्नाता भाषापर्याप्ति, परमसञ्ज्ञिनामविशिष्टानां केवलाया असत्यामृषाया अव्यवहार्याया अपि भावात्सामान्यजीवानपेक्ष्य भाषामन'पर्याप्तिद्वयमादाय षट्कमुक्तं पर्याप्तीनामिति, परो हेतुर्वाऽपरोक्षवेदिगम्यः स्यादिति, भाष्यकारेण तु दार्शनिकपर्षदो विशिष्टा एवाश्रित्येति पञ्चोक्ता, आर्षानुसृत्यर्थं चैकीयमतेन षडपि दर्शिता, आहाराद्या नियतक्रमाश्चतस्र पर्याप्तय, भाषामनसोस्त्वनियम· क्रमे, भाषाविशेषे मनस प्राग् वृत्तेरिति भाष्यतत्त्वम् ॥

तथा नारकाणामपि सरागसंयमादीनां महारम्भादीनां चाभावान्न नाकिनां नारकाणां वाऽऽयुषो बन्ध इति, एतदनुसारेणवैकेन्द्रियविकलेन्द्रियाणा यद्यद्भवप्रत्ययेन न वध्यते कर्म तत्तदनुसारेण कारणमाकलनीयमिति ॥

प्र० ११४४-ननु अर्हदादीनां स्थानकानामाराधनैर्जिननामकर्मणो बन्धो भवति, तत् किं जिननामकर्म आयु कर्मवदेकश एव वध्यते ? इति चेत्।

उ०-शृणु, जिननामकर्म अर्हदादिपदानामाराधनाद् भवति, तदाराधनं च नरभव एव, ततस्तन्नाम नरभव एव बध्यते पर तस्यान्त कोटीकोटीसागरस्थितिकत्वात्तत्तिर्यग्गतावपि सत्तया प्राप्यते, पर प्राक् तृतीये भवे तन्निकाच्यते, तदनन्तर च सम्यक्त्वप्रत्ययात् तस्य सतत जिननाम्नो बन्धो यावदपूर्वकरण क्षपकश्रेणिगत, अत एव जिननाम सम्यक्त्वप्रत्ययं गीयते, जिनश्च प्राक् तृतीयाद्भवादवश्यं शुद्ध क्षायोपशमिकं क्षायिक वा सम्यक्त्वं धारयेदेव, अपूर्वकरणे तु क्षायिकदर्शनवानेव सर्व इति ॥

प्र० ११४५.-ननु वर्षावासादनन्तरमर्वाग् वर्षावासादष्टौ मासा ये विहरणीयास्ते हेमन्तादिका ग्रीष्मान्ता भवन्ति तथापि श्रीपर्युषणाकल्पे 'अट्ठ गिम्हहेमतिए मासे'त्ति दशाश्रुतादिनिर्युक्तावपि 'गिम्हहेमते'त्युक्त तत्कथ?, यतो मासानां न ग्रीष्महेमतादिक क्रम इति चेत्।

उ०-सत्यं, अत्र ग्रीष्मशब्दस्य प्राग्निपात, समासेऽल्पस्वरत्वात्, क्रमस्तु मार्गादीनां मासानां क्रम इति प्राग् हैमतिका पश्चाच्च ग्रैष्मा मासा इति ज्ञेयमिति ॥

प्र० ११४६-ननु वर्षावग्रहादौ यत् षट्सु दिक्षु सक्रोशयोजनादिकमुच्यते, तत्र प्रारम्भोऽवग्रहमानस्य कुत ?, यतो यदि स उपाश्रयाद् भण्यते तर्हि अयोध्याद्वारवतीराजगृहादिषु नगरेष्वप्यपूर्ण स्यादिति चेन्।

उ० – 'उज्जाणाओ परेण'तिनिर्युक्तिकारवचस तत्तन्नगराणामुद्यानभूमेस्तत्तदवग्रहाणामारम्भोऽवसेय इति, यच्चात्रोपाश्रयस्योल्लेख. स क्षेत्रमुपाश्रयतया परिगृह्य अस्वाध्यायखड्यादिषु स वसत्यर्थोऽपीति ॥

प्र० ११४७-ननु श्रीकल्पे जिनगणधरावलिकाभ्यां शेषाणां जिनानां किं वाच्यमिति चेत्।

उ०-भगवतो महावीरस्य चरित्रमस्वप्नपाठ कीर्तनीयतया

चतुरङ्ग वेदादि षडङ्ग राज्यं सप्ताङ्ग निमित्ततत्त्वप्रवृत्तिवैद्यकानि चाप्यष्टाङ्गानि ब्रह्म नवाङ्ग प्रत्यायातिर्दशाङ्गिकी शीलाङ्गान्यष्टादशसहस्रमितानीति, सर्यनपस्नोरिव श्रुतस्य द्वादशाङ्गत्वे न कापि क्षतिरिति ॥

प्र० ११५२–ननु शक्रस्तवपाठ कया मुद्रया कार्य इति? चेत्।

उ०–'थयपादो होइ जोगमुद्दाए'त्तिवचनात् शक्रस्तवस्य स्तवपञ्चकान्तर्गतत्वाद्योगमुद्रयैव पाठ कार्य, पर तस्य प्रणिपातदण्डकत्वादादौ पञ्चाङ्ग प्रणिपात 'पचगो पणिवाओ' त्तिवचनात् कर्त्तव्य, यच्च ज्ञातधर्मकथादिषु पर्यङ्कासनं तदनशनादिकारणजात, शक्रादीनां चतुरङ्गावनामश्च वनमालाया रक्षणाय, अन्यथा तस्या भूमौ पात स्यात्तताधमता स्यादिति ॥

प्र० ११५३–ननु सर्वेषामेव कायप्रवीचाराणा देवानां प्रज्ञापनाप्रवीचारपदोक्त एव क्रमोऽन्यो वेति।

उ०–चित्रा हि कायप्रवीचारा, केचित् सदेवीका अपि अपरिगृहीताभिः सह रन्तुकामा, केचित् च्युतदेवीत्वादिभिरदेवीका अपि ताभीरन्तुकामा, पल्योपममानस्थितिका अपरिगृहीता सौधर्मदेवैरेवोपभोग्या इति सप्रवीचारपदोक्त प्रवीचारक्रमः अपरिगृहीतदेवीविषय, सपरिग्रहदेवीषु श्रीभगवत्युक्तशक्रेन्द्रक्रम स्त्रीपरिभोगे अवसेय इति ॥

प्र० ११५४–ननु तिरश्चामावलिकाया असख्येयभागमाना आवर्ता स्थितिरभिधीयते तत्कथं? वनस्पतीनामनाद्यनन्तस्थितिमानत्वादिति चेत्।

उ० – सत्य, देवमनुष्यनारकलक्षणाद् गत्यन्तरादागतानां सा स्थिति' न तु तिर्यक्ष्ववस्थितानामिति, व्यवहारराशिमागत्य पुनस्तत्रोत्पन्नस्यैतावती स्थितिरेव नाधिकेति तत्त्वं, अयमेव वनस्पतिकाल, वनस्पतिमन्तरा तु न क्वाप्यन्यत्रैतावती यत कायस्थितिरिति।

प्र० ११५५–ननु चैत्यवन्दनसूत्रस्य ललितविस्तराख्यव्याख्यायां केवलं प्रणिपातदण्डकसूत्र एवालापकानां सख्यानं सम्पदश्च अनामहेतुका आख्याता:, अर्हच्चैत्यस्तवादीनां व्याख्यानं सविस्तरं कृत्वाऽपि तद्गतालापकसम्पत्संख्यादि किमिति न दर्शितमिति? चेत्।

उ०–एतस्यां वृत्तौ शक्रस्तवे श्रीमहानिशीथे च पञ्चनमस्कारादिसूत्रेषु सम्पदालापकानामुक्तत्वात् चैत्यवन्दनसूत्रादि-

प्र० ११५८-ननु 'भावेण सद्दहतो, अयाणमाणेऽवि सम्मत्त'मिति यदुच्यते, तत्कथ घटते?, अज्ञातानां जीवादीना तत्त्वानां श्रद्धानस्यैवायोगादिति चेत्।

उ०-सत्य, केचिदत्र विशेषेण निर्देशादि-सदादिद्वारैर्यद्ज्ञान जीवादीनां तदभावमपेक्ष्य सत्यपि सामान्ये ज्ञाने अज्ञानमाहु', केचित गुरुपारतन्त्र्यमेव माषतुषादीना ज्ञान तदधीनं च श्रद्धानं च, यथा शिशोर्मातृवचसाऽज्ञानेऽपि पदार्थानां प्रत्यायनं चाध्यक्षमीक्ष्यते तद्वद्यदि तेषां नत् स्यात् तदा स्पष्टमेवाज्ञानेऽपि जीवादीना श्रद्धान तद्वतोऽपि सम्यक्त्व च, एव च श्रावकपुत्रादीना सङ्गच्छते नैसर्गिक सम्यक्त्व च तथाप्रकारस्य जीवादिगतस्य बोधस्याभावेऽपीति॥

प्र० ११५९-ननु कर्मानुबद्धत्वादेव भवावर्त्तो हेयतयेष्यते, अत एव च सिध्यदवस्थाभिधाने 'जाइजरामरणकम्मबंधणविमुक्के'त्ति 'कृत्स्नकर्मविप्रयोगो मोक्ष'इत्यादि चोच्यते तर्हि भाष्यकारेण 'जन्मनि कर्मक्लेशै'रिति किमर्थमुक्तमिति ? चेत्।

उ०-शृणु, 'कर्मक्लेशविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर'इति योगाचार्या आहु', मूलं च तत्र कर्मक्लेशा इति, सर्वसिद्धेश्वरतादर्शनायेद स्यात्, तत्त्वतस्तु कर्माणि तानि कर्त्तव्यानीष्टानि च यानि स्युर्निरनुबन्धीनि कुशलानुबन्धीनि वा, तद्वांश्च नरभव सुलभ्यतया व्याख्येय इति क्लेशानुबन्धिभिरेव कर्मभि संसारस्य नरभवस्य वाऽनुबद्धत्वादनिष्टतेतिदर्शनाय 'कर्मक्लेशैरनुबद्ध' इति योग्यमेवोक्त, पारमर्षेऽपि 'सिज्झति' यावत् 'सव्वदुक्खाणामत करेंती'त्याद्युच्यत एवेति॥

प्र० ११६०-ननु 'सम्मद्दिट्ठी जीवो, उवइट्ठं पवयण तु सद्दहइ'ति यदुच्यते तत्कथ घटते?, यतो नहि प्रवचनश्रद्धया रहित सम्यग्दर्शनी भवतीति चेत।

उ० - सत्य, अनन्तानुबन्ध्यादिसप्तकस्य क्षयोपशमादिना यदात्मगुणरूपं सम्यक्त्वं तद्वानिह सम्यग्दृष्टिर्ग्राह्य, उत्पन्नसम्यक्त्वाच्च भाविभद्रस्य पान्थस्य सत्पथश्रद्धानमिव जिनाद्युपदिष्टस्य तत्त्वस्य श्रद्धावानेव भवतीति तत्त्वम्॥

प्र० ११६१ - ननु एकत्रोच्यते यदुत-'सव्वगयं सम्मत्त' ति, तथा च सर्वेषु द्रव्येषु पर्यायेषु च सम्यक् श्रद्धितेषु प्रज्ञापनीयेतरेषु च सत्येषु मतेषु सम्यग्दर्शनमिति, अन्यत्र चोच्यते 'सम्मद्दिट्ठी जीवो, उवइट्ठं पवयण तु सद्दहई'त्यनेन प्रवचनप्रति-

करणात्, अन्येषां तु श्रुतिशब्दस्त्वनुकृत्य विपर्यासित, नित्या वेदा केषाञ्चित् केषाञ्चिदन्यादिभ्य उद्धृता इति, न तत्र श्रुतिशब्दो यथार्थ, श्रुतस्याल्पतमांशोऽपि सूत्रं, अत एव जो सुत्तमहिज्जंतो'त्ति सुत्त गणहररइय'मिति सूत्रोक्तस्यैकस्येत्यादि च, उपक्रमाधिकारे च परम्परावसानत्वादागम इति ॥

प्र० ११६५–ननु उपाध्याया साधवश्च भगवन्तो ज्ञानादि पञ्चकस्याचारेषु साधव एव स्यु, नहि कोऽपि वाचको मुनिर्वा पञ्चाचाराचरणविहीन, प्रत्युत विनयबहुमानाद्या आचारा उपाध्यायादीना विशेषेण स्यु, यतस्ते शासने आराध्याराधकोभयकार्यलीना, आचार्यास्तु भगवन्त' शासनप्रवृत्तावाराधकपदस्था एवेति चेत्।

उ०–सत्य, वाचका अनगाराश्च ज्ञानादिपञ्चाचाराचरणलीना एव परं न ते स्वतन्त्रतया तथा, किन्त्वाचार्याक्षिप्ता एव, अत एव पाक्षिकक्षामणकेषु 'तुब्भण्हं संतिय'मित्यादि कथ्यते, आचार्यास्तु प्रवर्त्तका शासनस्येति त एव पञ्चाचाराचरणनिपुणा इति आचारेषु साधव इत्याचार्या इति कथ्यन्ते ॥

प्र० ११६६–ननु सकलस्यापि शासनस्य प्रवर्त्तका आचार्या भगवन्त सकलसूत्राणामनुयोगांश्च त एव कर्त्तुमलास्तर्हि द्वादशाङ्गादिसूत्राणां स्वाध्यायलीनत्वमध्यापकत्वं चोपाध्यायानामेव कथं गीयते? इति चेत्।

उ०–सत्यं 'अनुयोगकृदाचार्य' इत्याप्तवचनमनुसृत्यार्थप्रदानभेदेनैवाचार्यपदस्योपाध्यायपदात् सूत्रप्रदानपराद्भिन्नता, पर प्रागुद्दिष्टसमुद्दिष्टानुज्ञातानामेव सूत्राणामनुयोगा: प्रवर्त्तन्ते, अनुयोगप्रवृत्तौ च न तत्र उपधानादिनियम', अतो नन्द्याद्यनुक्रमेणानुयोग, उद्देशादयस्तूपधानादिनियमेनैवावश्यकादीनां भवन्ति, ततो नियमपूर्वकं सूत्राणामुद्देशादिविधिनोपादान तच्चोपाध्यायपार्श्वे एवेति ॥

प्र० ११६७–ननु आचार्या उपाध्यायाश्च गच्छस्य मेढीप्रभृतिदृष्टान्तानुसृता इति सन्त्येव सहायका संयमे, तत् किमिति मुनीनां संयमसहायो गुण आख्यायते? इति चेत्।

उ–सत्य, आचार्योपाध्याया प्रवर्तका गच्छस्य मेढ्यादिभूताश्च पर सारणादिना तेषां तत्त्वं, वैयावृत्यकरणे नियोगस्तु मुनीनामेव, तेषामेव वैयावृत्यस्याकरणे शास्त्रकारैरुदीरितं प्रायश्चित्तमिति योग्यमुक्तं मुनय सहायका इति ॥

णमप्यत्रेति, कस्तदर्थ ? इति चेत् ।

उ०–अत्रैव सम्भावना यदुत–सर्वेऽपि देवा देवलोकाच्च्यवमाना 'त सुरविमाणविभव, चिंतिय चवण च देवलोगाओ । अइवलिंय चिय हियय, सयसक्कर ज न फिट्टइ' ॥१॥ इत्युपदेशमालादिवचनाच्छोकग्रस्ता मृगा इव च्यवन्ते, भगवज्जिनादयस्तु चरमशरीरिण' आसन्नभद्रत्वान्न तथा विलपन्ति, तत्राप्ययं तु भगवान् भाविजिनः सिंहजात इव सिंहरूप एव सन् कुक्षौ आगतो देवानन्दाया इति, अन्यामप्यागमज्ञा ऊहंतामिति ॥

प्र० ११७२ – ननु या दर्शनाद्या श्राद्धप्रतिमा एकादश ता श्राद्धानां किमभिग्रहरूपा अवस्थाविशेषरूपा वेति? चेत् ।

उ०–आदावक्रियावादित्वमास्थाय श्रमणभूतान्ताश्चेत्तास्तदा तु दशाविशेषा द्वादशानां नगाणां ता, एकादशसु च ते श्राद्धत्वमनुसर्त्तार', आद्यावस्था तु कृष्णपाक्षिकाणां नियममिथ्यादृशां च, यदा चाचरितव्रता अपि आनन्ददिवत्ता प्रतिपद्येरस्तदा एकादशापि ता अभिग्रहविशेषा', आजन्मचीर्णमहाव्रतानामपि यथा शुद्धिविशेषार्थमन्त्यावस्थायां पुनर्महाव्रतादीनामुच्चारण तथा निश्शल्यनिरतिचारदर्शनादिप्रतिपालनार्थमेता एकादश श्राद्धप्रतिमा इति ॥

प्र० ११७३–ननु 'चारविसेसेण भवे, सुहदुहविही मणुस्साण'मित्यादिश्रीजीवाभिगमादिवचनात् यो मनुष्याणां सुखदु'खविधिश्चन्द्रसूर्यनक्षत्रमहाग्रहचारैर्निष्पन्नो गण्यते, स किं सुखादेर्विधायकतया ज्ञापकतया वेति?, आद्ये, तिर्यगादीनां स विधिरस्त्येव, नृक्षेत्राद्बहिरपि च किंकृत, तत्र चन्द्रादीनां चारस्यैवाभावात्, ज्ञापकत्वे तु क एव प्रभावो ज्योतिष्काणां यतो विडालगधादीनामपि तथा तथा तत्तज्ज्ञापकत्वादिति चेत् ।

उ०–सत्यं यथाहि नृलोकाद्बहि' कालद्रव्यस्योपष्टम्भकस्याभावेऽपि पदार्थानां स्वय वर्त्तनादीनि भवन्ति दृष्टा न नृलोके तदुपष्टम्भकस्य कालद्रव्यस्यापलाप उचित', तथात्राऽपि नराणां सुखदुःखविधावुपष्टम्भका एते इति न कश्चिद्दोष ॥

प्र० ११७४–ननु मोक्षाधिकारिणामनगाराणां ज्योतिष्कैर्मनुष्याणां चारविशेषेण सुखदुःखकारिभिर्ज्ञातै· किं प्रयोजनमिति? चेत्।

उ०–सत्यं, यथा ज्योतिष्का स्वचारविशेषेण नराणां सुखदु खयोरुपष्टम्भकतया विधातारस्तथैव शुभाशुभविधिनिर्विघ्नवृद्धिप्रभृतिषूपष्टम्भकतया विधातार, अत एव च गणितानुयोग-

प्रतिकारक्रियाऽनुष्ठायत एवेति न कोऽपि द्वयोर्विध्योर्विशेष, सम्यग्दर्शनादिद्वारा संवरनिर्जराभ्यां साधनं मोक्षस्यावश्यकमिति सर्वत्र साध्यं ध्येयमिति ॥

प्र० ११७८– ननु श्रीपर्युषणाकल्पाध्ययनमधुना सर्वेष्वादर्शेषु श्रीदशाश्रुतस्कन्धाङ्गितया दृश्यते ततस्तत्सवाद्नाय किं वाच्यमिति? चेत्।

उ० भगवत्या पचदशशतके 'देवदुसमादाय पव्वइए'त्ति सूत्रावयव, श्रीसमवायाङ्गे च 'समवसरणं जहा कप्पे'त्ति सूत्रावयव', आचाराङ्गवृत्तौ दशाश्रुतस्कन्धचूर्णौ च 'तेणं कालेण' मित्यादेः 'वायारिये' त्यादेश्च विवरण तत्सवाद्ने प्रत्यल, स्वमसूत्राण्यनेकविधानीति तु तच्चूर्ण्यन्तर्वाच्यादिषु स्पष्टमेव, 'अओ उ थेरावलिं वोच्छ'मिति दशाश्रुतनिर्युक्तावतरणमप्यस्तीति॥

प्र० ११७९–ननु क्रियावादिनामक्रियावादिनां वा के भव्या अभव्या वा? के कृष्णपाक्षिका शुक्लपाक्षिका वेति? चेत्।

उ०–अन्यतीर्थिकसमवसरणेषु वर्ण्यमानास्तदाचारवन्तः सर्वेऽपि भव्या वा भवेयुरभव्या वेति न तत्र कोऽपि नियम, अनन्तशो जिनमतगतसर्वविरतिमतामप्यभव्यत्वस्य सम्भवादिति ॥

प्र० ११८०–ननु किमन्यथाविधा. क्रियावादिनोऽक्रियावादिनो वाका सन्ति? येनैते एव विशेपिता इति चेत्।

उ०–सन्त्येव श्रीदशाश्रुतस्कन्धे श्रावकस्याद्यायां प्रतिमायां तद्वन्त क्रियावादीत्यभिख्यावन्त, नियमेन च ते क्रियावादिन शुक्लपाक्षिका इति, तेषां ससारमान जघन्यमपार्धपुद्गलावर्त्त परन्तु पुद्गलावर्त्त, नियमश्चैवविध एवा तत्रेति, तदुपक्रमे च ये प्रतिमाहीना मनुष्या अधमाचारा वर्णितास्तेपामक्रियावादीत्यभिख्या कृता ते भव्या अभव्या द्विविधा अपि भवन्ति पर ते तथाविधा सर्वेऽपि नियमेन कृष्णपाक्षिका एवेति नियमित तत्रेति॥

प्र० ११८१-ननु स्वप्नानां फल तत्स्वरूपानुसारेण तत्फलोद्देशकवचनानुसारेण वेति? चेत्।

उ०–'एए चोद्दस सुमिणे लच्चा पासेइ तित्थयरमाये'त्यादिसूत्रसमुदायादेतत्तु स्पष्टमेव यत्स्वप्नानामुत्तमत्वमनुसृत्यैव फलं, परं यथा बीजस्वरूपानुसारेणाङ्कुरादीनामुत्पत्तावपि पृथ्वीवातादय सहकारिणस्तथा स्वप्नफलेऽपि फलोद्देशकोक्तेरनुसारेण फलप्राप्तिरिति, स्पष्टं चैतदावश्यकादिषु स्वप्नदृष्टान्ते कार्पटिकस्य शशाङ्कमण्डलस्वप्नस्यापि फलोद्देशकोक्तिमनुसृत्यात्यल्प

पञ्चाशके तासामन्तर्मुहूर्त्तादिकमपि कालमानमुक्तमेव,तत्र कारणं च प्रव्रज्या मरण वेति द्वय दर्शित, अन्यथा त्वेकाद्येकादशमासा एव ता इति ॥

प्र० ११८६–ननु किमिति वेदनीयादीनि षट् कारणान्याहारकरणस्य हेतुतया प्रदर्श्यन्ते ?, सर्वेषां कारणाना सदा सर्वेषु सयमिषु भावादिति चेत् ।

उ०–सत्य, परं संयमिनामेवावस्थाविशेषेण कारणविशेषस्य विशिष्टतादर्शनार्थमेतानि षट् कारणतयोद्दिश्यन्ते, शैक्षकादीनां प्रथमं पिण्डकल्पिकादीना द्वितीयं ग्रामानुग्रामविहारदेशाटनादिकारिणां तृतीय अध्वानादिषु ससार्थं गतानां चतुर्थ अभ्युद्यतविहारमरणपरिकर्मसंलेखनाकारिणां पञ्चमं अशनादिके प्रतिज्ञातेऽपि समुद्घाते तथाविधानां कदाचिदाहारप्रसङ्गे षष्ठमेव केवलं कारणमिति, सुधीभिरन्यथापि चोह्यान्येतानीति ॥

प्र० ११८७–ननु सामायिकस्य कथ लाभ इतिद्वारं विवृण्वद्भिर्भगवद्भिर्निर्युक्तिकारै किमनेकधा 'चोल्लग पासगे'त्यादिभिर्हेतुद्वारस्य विवरण कृतं ?, 'उवएसथुइप्पदाणेसु'त्तिगाथया तथाविधे पुनरुक्तिदोषस्याभाव एव तत्र परो वेति चेत् ।

उ०–शृणु, प्रथम तावत् सामायिकवद्भ्य संयमवीर्यप्रवृत्तेभ्य कथ्यतेऽयं समग्रोऽप्युपोद्घातादिरनुयोगो गौतमादिभ्य., तेषां च मनुष्यादिसामग्री प्राप्तपूर्विकैव, ततस्तानुद्दिश्यैवमत्र विधेय यदुत–'जया जीवमजीवे ये'त्यादिगुणपद्प्राप्तिपारम्पर्येण भवन्तो लब्धारो लोकमस्तकस्थं स्थानमनेनैव भवेन तदा वर, परं सावशेषेषु कर्मसु न लब्धं चेत् तदाऽगाधभववारिधौ परिभ्राम्यतां भवतां गतेयं मनुजत्वादिका समग्रा सामग्री चोल्लकादिदृष्टान्तदशकवद् दुर्लभैव परं सम्यक् समाराद्धसंयमा अपि नापि लब्धार उक्तकारणात् परमपदं तथापि 'तत्थ ठिच्चा जहा ठाण'मित्यादि यावद्'तवसा धुयकम्मंसे सिद्धे हवइ सासए'त्यन्त्यर्थोउत्तराध्ययनवचनमनुश्रुत्य सयमवीर्यवृद्धयेऽन्यथा गताया नरत्वादिसामग्र्या दुर्लभतमत्वमाख्यायते, कियद्भेदा का का च सा मनुष्यादिका सामग्री यस्यां प्रत्येकपद चोल्लकादिदृष्टान्तदशकदुर्लभमित्याशङ्कापनुत्तये चाशठकरणान्तानि त्रयोदशस्थानानि दुर्लभसामग्रीरूपतया दर्शितानि, 'जइ लहइ चउण्हमन्नयरंतिवचनात् श्रुतसामायिकमप्यधिकृतं तदपि कियतो

र्मस्वामिने राजगृहे उक्त, तदर्थमाद्युपोद्घात, अत एव षष्ठाद्यङ्गानामुपोद्घातवदेव, अत एव च 'समणे भगवं महावीरे समोसढे सेव भंतेत्ति, विहरइ बहिया विहरई'त्यादय उक्तय स्थाने स्थानेऽत्रोपलभ्यमाना शोभन्ते, सूक्ष्मदृष्ट्या निरीक्षणे यत्र यत्र 'सेवं भते सेव भंते'त्ति, तत्र केवला प्रश्नोत्तरसमाप्ति मासकल्पसमाप्तिश्च, यत्र च 'सेवं भते सेव भते विहरइ'त्ति पाठस्तत्र चातुर्मासिकसमाप्ति, 'पडिनिक्खमइ बहिया विहरइ'-त्याद्या दीर्घविहारसूचका, एवं प्रतिभाति, अन क्वचिदुद्देशकमध्येऽपि उपोद्घात क्वचिदुद्देशकस्य शतकस्यापि चादौ नोपोद्घात, एत्र च भगवता सुधर्मस्वामिना भगवतो महावीरजीवनवृत्ताख्यानमत्र धृत, तथा च माहात्म्यमस्यानुपमं सहेतुक, एकादशशतकात्कोणिकातिदेश पञ्चदशशतके च गोशालवृत्तान्तस्तेजोलेश्यातापशमनान्तो यथायथमैतिहासिकवृत्त्या शोभते ॥

प्र० १३११ – प्रतिक्रमणस्यातीतकालीननिन्दागर्हापूर्वकत्वात् । किमिति सामायिकसूत्रे 'निंदामि' गरिहामि' इति ? किमिति चेर्यापथिक्यालोचनदण्डकयोश्च नैते पदे? इति ।

उ०–सामायिकमहाव्रताङ्गीकारवदोघविशेषावत्र, अत एव सर्वत्र प्रागीर्यापथिकी सामान्यप्रतिक्रमणरूपा हि सा, प्रतिक्रमणावश्यके तूभे अप्यङ्गसूत्रे कायोत्सर्गावश्यकेऽपि ॥

प्र० १३१२–ननु ईर्यापथिक्यां 'इच्छाकारेणे'त्याद्युक्त्वा चक्रवालसामाचार्यन्तर्गतेच्छाकारसत्यापन चेत् किं न सामायिकादाविति? ।

उ०–सत्यम्, तत्र प्रागेव सदेशनादिना तत्सत्यापनं भवति, यद्वा तत्पूर्वकत्वात् सर्वानुष्ठानस्यालोचने प्रतिक्रमणादौ च तदनुवृत्ति, तथा च न शासनमर्यादाभङ्ग इति ॥

प्र० १३१३–प्रत्याख्यामि वोस्सिरामीति किमिति क्रियाद्वय प्रत्याख्याने ?

उ०–एका अङ्गीकारार्थप्रस्थापरा त्वनिष्टत्यागार्था, नह्यनिष्टत्याग विनेष्टप्रतिपत्तिर्गरीयसीति युक्तमेव क्रियाद्वय तदिति ॥

प्र० १३१४–किमिति सावद्यस्य त्यागात् प्राक् सामायिकस्य कृतिरिति? ।

उ०–ज्ञानादिलाभादिरूप हि सामायिकं, ज्ञानादयश्च सिद्ध-

पाठोच्चारपूर्वक यथा तथाऽऽन्तरपरिणामेन ज्ञानादिविराधनाया' परिहारोऽपि, तदाश्रिताश्च गाथा एता', वधादीनामप्यतिचारता-ऽऽन्तरव्रतापेक्षयैव, अत एव शताधिकाश्चतुर्विंशतिरतिचारा अन्यथा पञ्चसप्तति स्यु, सामायिकेनाप्यङ्गीकारो ज्ञानादीनाम्॥

प्र० १३१९-ननु सम्यक्त्व दर्शनाचाराश्च कथं भिन्नाश्चेत्?।

उ०-सार्वदिक शुद्धात्मपरिणामरूप सम्यक्त्व तन्मालिन्याभावे न स्युरेव शङ्कादय, निश्शंकितत्वादिनाऽवस्थानं च दर्शनाचार, एतदर्थमेव च 'तमेवे'त्यादि 'कत्थइ मइदोब्बल्लेणे' त्यादि च, तथा च शङ्काद्यनुत्पातहेतु' सम्यक्त्वं तदुत्पादप्रसगप्राप्तावपि निश्शङ्कितत्वादित्येनावस्थान दर्शनाचारः॥

प्र० १३२०-ननु सम्यक्त्वातिचारदर्शनातिचाररूपयो' शङ्काकाङ्क्षयो क प्रतिविशेष?, इति चेत्।

उ०-न कश्चित्तन्मालिन्ये तत्प्रतिघातप्रत्यलप्रयत्नस्याविधाने एषातिचारे भिन्नता, तत्त्वविषया वा सम्यक्त्वस्याचारविषयाश्च दर्शनाचारस्य, अत एव न सच्छ्रद्धावतामुत्सूत्र वच आचारादि, अत एव श्रीवीरादीनामवर्णवादे मिथ्यात्वादि ध्रौव्यं, न स्यादेव सम्यक्त्वे सति अनाभोगेनापि जिनसाध्ववर्णादि, आसन्नभव्यता ह्येवा-यन्न स्याद्विधिमत्प्रद्वेषादि, तद्धत्वे दूरभव्यत्वादिध्रौव्यात्

प्र० १३२१ – ननु परमोत्कृष्टलेश्याशुद्धिसंकलितानां महाव्रतधराणां यदि सर्वार्थादिषु त्रयस्त्रिंशत्सागरोपमस्थितिकेषूत्पादो भवति, देशविरतानामणुव्रतधराणां सामान्यलेश्याशुद्ध्यलकृतानां सौधर्मादिषूत्पादो भवति, शास्त्रीयो निगावश्रस्तावदेष विधि, परं भविष्यत्यालोचनायां तु तेषां सर्वार्थसिद्ध्यादिगतानां महानन्दपदं तद्गतमव्याबाधत्वादि च त्रयस्त्रिंशति सागरोपमेषु व्यतीतेषु भावि, इतश्च सौधर्मादिषूत्पन्नानां देशविरतानां पल्योपमादिस्थितिमत्त्वात् एकादिपल्योपमान्ते एव भावि महानन्दमयं महोदयपद, तत को गुणोऽधिक सर्वविरतेरिति, चेत्।

उ०-सत्यम्, प्रथम तावत् येषां जीवानां यावती भवस्थितिस्तावन्तं काल तैरवश्यं भवे स्थातव्यमिति भवे त्रयस्त्रिंशदादिसागरोपमाणा नियतेऽवस्थाने सर्वार्थादिगतनयाऽवस्थानं युक्तिमदेव, सर्वविरता अपि सौधर्मादिष्वनेके उत्पद्यन्ते शीघ्र च महानन्दमय महोदयपदं चाप्नुवन्तीति नांशतोऽप्यनाश्वास सर्वविरतौ श्रद्धालूनां भवतीति, नहि कस्याप्यसुमनो भवस्थिति·

नन्तरेण क्वापि परत्र काले तथाविधं दु:खादिसाधनान्यन्तरेण दु:खादि भवति, न च तत्र तानि न भवन्त्यपि, एव न नियत्या क्वापि अरूपिणां रूपित्व अन्यद्वा तथाविधमस्वाभाविकं क्रियते, एव कर्मपुरुषकारावपि स्वसाध्य स्वसत्तायामेव निर्वर्तयत नान्यथेति सर्वेऽपि कालादयो यथायथं कारणानि, ततो योग्यमेव तीर्थस्थापनादीनि, (१) भोगभूम्यादीनामनुभावास्तत्तत्कालकृताः (२) धर्मादीनां षण्णां द्रव्याणां धर्मास्तत्तत्स्वभावकृता एव (३) भव्यत्वपरिपाकाद्यो नियतिकृता एव (४) व्यवहारराश्यागमनादीनि पूर्वकृतोद्भूतान्येव (५) यथाप्रवृत्तितोऽयोगिगुणश्रेणिपर्यन्ताः पुरुषकारकृता एव, सामान्येन मुद्गपक्त्यादिष्वपि तु पञ्चापि समुदितानि कालादीनि कारणानीति तत्त्वमिति॥

प्र० १३२५ – ननु यथाप्रवृत्तिकरणस्य विशेषावश्यकादिष्वनादिः कालो निर्दिष्टः कर्मप्रकृत्यादिषु चान्तर्मौहूर्त्तिकस्तदत्र किं तत्त्वमिति ? चेत्।

उ०–शृणु, जगति जीवा द्विविधा भव्या अभव्याश्च, तत्र केचिदभव्याऽपि सन्तोऽनादिकालादायातपूर्वा व्यवहारराशिषु आगत्य च जाताः संज्ञिपञ्चेन्द्रियास्तत्र चोत्कृष्टां सप्ततिकोटीकोटीसागरमानां स्थितिं बद्धवन्त, ततः परं अभव्यानामाद्यकरणस्य सत्त्वादनादित एव प्रारब्धा द्रव्यसम्यक्त्वयोग्यतामधिगम्य यथाप्रवृत्तिकरणं विधातु तथा भव्याऽपि अनन्तशो द्रव्यलिङ्गाभ्युपगमात् स्युरिति तादृशजीवापेक्षया तदनादि स्यात्, मरुदेवीस्वामिन्यादिवदप्राप्तत्रसत्वानामन्तकृत्केवलित्वभवनादावान्तर्मौहूर्तिकमपि तत् स्यात्, अनादित एकेन्द्रियेषु तु सप्तसागरसप्तभागपरा कर्मणां स्थितिरेव नास्तीति तत्रोत्कृष्टस्थितेर्यथाप्रवृत्तिकरणस्य चाभाव एवेति॥

प्र० १३२६–ननु प्रतिबन्धकनाशस्य वैचित्र्येऽत्र प्रतिबध्यस्य वैचित्र्य न योग्य, चक्षुरादीनामनेकधा प्रतिबन्धकानामनेकधा नाशेऽपि चाक्षुषत्वस्य भेदाभावात्, तद्वद् अनन्तानुबन्ध्यादीनां नाशस्य वैचित्र्येण सम्यक्त्वस्य किं क्षायिकाद्यो भेदा ? इति चेत्।

उ० – सत्यम्, चक्षुरादिप्रतिबन्धकानां वैचित्र्यमस्ति न तु नाशे, अत्र तु सम्यक्त्वप्रतिबन्धकानां नाशस्यैव वैचित्र्यमिति युक्ता एव सम्यक्त्वस्य क्षायिकाद्यो भेदा उक्ता श्रीते तत्त्वार्थभाष्येऽपि श्रीउमास्वातिभिरिति॥

त्वव्याघात इति ॥

प्र० १३३०-ननु श्रीव्याख्याप्रज्ञप्तिगतं मद्दुकश्रमणोपासकवृत्तमालम्ब्य केचित् सप्तदशशताब्दीया वदन्ति यदुत-नवीन कल्पनाजालमारचयतामर्हदादीनामाशातना तज्जन्यश्चानन्तःसंसार इति, तदा श्रीसिद्धसेनदिवाकरपादैः संमत्यादिषु श्रीहरिभद्रसूर्यादिभिश्च योगबिन्द्वादिषु इच्छायोगादिभेदादिदृष्टयश्च तथात्वेऽप्युक्तास्तत्र किं तत्त्वमिति ? चेत्।

उ०-भगवत्युक्त मद्दुकाख्यानमरूपिपदार्थाना छद्मस्थदर्शनादिभाव सिद्धान्तविरुद्धमर्थमाश्रित्योक्त, श्रीसिद्धसेनदिवाकरादिभिश्च सिद्धान्तेनाविरुद्ध युक्तिभिरुद्भावितमिति न तत्र कश्चिद्दोषः, सप्तदशशताब्दीयास्तु व्यक्तिद्वेषान्ध्यमाश्रित्यानुत्तरीयत्वपदमाप्ताश्चैव निजगदुः, न च तद्विश्वासार्हमिति, आज्ञासिद्धानामविरुद्धार्थानां युक्तिशतैः समर्थनीयत्वादेव तु शास्त्रकारैर्दृष्टान्तसिद्धानामर्थाना दृष्टान्तैः साधयित्वैवोच्यमाने कथनविधेराराधकता, अन्यथा च विराधकतोक्ता, स्पष्ट चैतत् आवश्यकनिर्युक्तिपञ्चवस्त्वादिष्विति ॥

प्र० १३३१-ननु श्री योगबिन्द्वादिषु श्रीहरिभद्रसूरिभिर्जीवेषु प्रत्येक चित्र तथाभव्यत्व वर्णित तीर्थकृत्त्वादयश्च विशेषास्तत्प्रभवा इति चोक्तं, परं तत्पूर्वतनैर्ग्रन्थकृद्भिः कैरप्युक्तं नवेति ? चेत्।

उ०-श्रीहरिभद्रसूरिभिर्यदुपरि लघुवृत्तिरवचूरिरूपा लिखिता तस्मिन् पञ्चसूत्रीप्रकरणे स्पष्टतयोक्त, यदुत सुद्धधम्मसंपत्ती तहाभव्वत्ताइभावाओ'त्ति, ततो नैतत् भगवद्भि श्रीहरिभद्रसूरिभि स्वकल्पनोद्भव तथाभव्यत्वमुक्तमिति ॥

प्र० १३३२-ननु स्त्रीणा द्विपदत्वात् परिग्रहणाच्च कथ न परिग्रहपरिमाणे तत्संख्यादि स्वदारसंतोषिणामन्येषां च न मतस्तत्संबन्धीपरिग्रह इति चेत्।

उ०-सत्यम्, स्त्रीणां हि भरणादि अपत्याद्युत्पत्तिफलतया न तु ग्राह्यधार्यतयेति न तत्संख्यादि? परिग्रहपरिमाणे, तत्र हि ग्राह्य-धार्यद्रव्यसंख्यानमुचितं मतमिति ॥

प्र० १३३३-ननु देवलोके यथा अपरिगृहीता देव्यस्तथा अपरिगृहीता देवा भवन्ति न वेति ? चेत्।

उ०-प्राक् तावद्देवानां प्रायेण सद्देवीत्वमेव, अत एव च

उ०शृणु,सुविहितानां ध्येयस्तावन्मोक्षस्तत्साधनभूते संवरनिर्जरे च स्वरूपानुबन्धमहासावद्यानुष्ठानेन न ते, ततस्तन्निषिद्ध, लोचादिक तु चारित्रादिशिवाध्वरक्षापरमित्यनुमत, वैहानसादि तु निषिद्धमेव, आपवादिकाचरण तु न तच्छ्रेयस्कतया किन्तु श्रेयोमार्गस्य रक्षादिहेतुतयेति सम्यग्निभालनीयमिति॥

प्र० १३३७-ननु 'मूल द्वार' मित्यादौ 'द्विषट्कस्यास्य धर्मस्ये'त्युक्त्वा 'सम्मत्तमूल दुवालसविह गिहत्थधम्म' मित्याद्युक्त्वा च गृहस्थधर्मस्य किमिति सम्यक्त्वमूलतोच्यते, साधुधर्मस्य तु क्वचनापि न तथा विशेषणोक्तिरिति? चेत्।

उ०-सत्य, गृहस्थधर्मो हि व्यवहारप्रधान इति तत्र भिन्नमूलादीनि सम्यक्त्वस्य तत्र मूलत्वादि, साधुधर्मस्तु संवरनिर्जरारूप इति सम्यक्त्वस्वरूप एव, अत एवोच्यते 'ज मोणति पासह त सम्मति पासहे'त्यादि 'इमस्स धम्मस्स केवलिपन्नत्तस्स अहिंसालक्खणस्स यावत् पचमहव्वयजुत्तस्से'त्यादि, ततो न सम्यक्त्व साधुधर्मस्य मूलादि किन्तु तद्रूपमेवेति, अत एवातीचाराणामुपसहारे 'साधुतणे धर्मे एवाविध असजमतेत्रीशआशातनाप्रमादपर्यन्त, श्रावकतणे धर्मे सम्यक्त्वमूलबारव्रते' त्याद्युच्यमानं संगतिमद्भवति॥

प्र० १३३८-ननु जिनानां गर्भात्प्रभृति चेद्देवत्वमभिमन्येत सांवत्सरिकदानराज्यदानादिकं सर्वमपि तदा देवद्रव्यस्यादानरूपं स्यात्, सति केवले च चेद्देवत्वमभिमन्येत तर्हि तच्छद्मस्थावस्थायामाश्रित्य कृतेषु विधिषु यदुत्सर्पणादि तद्देवद्रव्य न स्यादिति चेत्।

उ०-शृणु, साध्यफलापेक्षया सयोगिन्येव सति देवत्वं प्राप्यफलापेक्षया गर्भादेव देवत्व, अत एव 'ज रयणिं वक्कमइ कुच्छिसि महायसो अरहे'ति गर्भावतार एव मताऽर्हत्ता, देवद्रव्यत्व च देवोद्देशेन क्रियमाणे चैत्यचरितकल्पितभेदे, तत सांवत्सरिकादीनामदेवद्रव्यत्वेऽपि आरात्रिकोत्सर्पणादिजनित देवद्रव्यमेवेति॥

प्र० १३३९-ननु अप्रतिपतिते ज्ञानदर्शने तदुभयभविके, पर चारित्र त्वैहभविकमेव मरणान्तमभ्युपगच्छता त्यज्यते च स्वक्रियायुक्त चरण, जीवै सर्वथा तत्त्यागे च कथ परभवे चरणरसिकता तदाराधकानामिति? चेत्।

उ० – सत्यमुक्त, परं सातमसात वा घनतरमुपार्ज्य

प्र० १३४३–ननु ये एकादशादिगुणस्थास्ते तु कषायाणां क्षयादुपशमाच्च स्युरकषाया, स्यात्ततश्च केवलो योगनिमित्त ईर्यापथ आश्रव, परं ये अन्ये अप्रमत्तास्तेषा सकषायत्वनियमात् कथमीर्यापथस्याश्रवोऽपि ? येनाप्रमत्तानां सकषायाणां बन्धस्य साम्परायिकत्वेऽपि आश्रव ईर्यापथस्यापि इष्यते इति चेत्।

उ० – श्रृणु, सूक्ष्मसम्परायान्तानामप्रमत्ताना सत्स्वपि कषायेषु केवला मायाप्रत्ययिकी क्रियेष्यते, सत्यपि लोभे न पारिग्रहिकी, तद्वदत्रापि सत्स्वपि कषायेषु न तत्प्रत्यय आश्रव इतीर्यापथस्याश्रव, कषायोपेतत्वाद्वन्धस्तु साम्परायिकस्यैव, ततश्च नान्यतीर्थीयवद्युगपदीर्यापथसाम्परायिकद्वयवन्धसंभव इति ॥

प्र० १३४४–ननु जगति द्रव्यैरनन्तैः कृत्वा असंख्येयेषु लोकक्षेत्रस्य भागेषु उत्सर्पिण्यादिसुषमादितदनुभागादिना कालेन वाल्यादिभिर्विविधाभिश्चावस्थाभि'आ असव्यवहारराशिनिर्गमाद् भावा अनुभूयन्तेऽसुमद्भिर्न च तद्गता चिन्तादिका कापि क्रिया तेषां प्राग्भवेऽभूत्, तत् कथमेतद् वैचित्र्यमभिमतं जगतो जायते? इति चेत्।

उ०–सत्यम्, प्राक् तावदेतद् गृहाण निश्चयतो, यदुत–सर्वेऽपि ससारिणोऽसुमन्त स्वकृतकर्मभुज एव, कर्म च यदा प्राग्भवे एतद्द्रव्यवेद्यं वद्ध तदा जीवस्य क्रोधादीनां कषायाणा वैचित्र्य तद्विषयाणामनुभागानामपि च विशेषतो वैचित्र्यं जातमभूदेव, ततश्च तज्जन्यविपाकवेदनार्हाणि द्रव्यादीनि जीवैरवश्यमाश्रयणीयान्येव, अत एवोच्यते उदयादिषु द्रव्यक्षेत्रकालभवभावान् प्राप्यैव प्रसङ्ग', 'उदयक्खयखओवसमोवसमा ज च कम्मुणो भणिया। दव्व खित्त काल, भावं च भव च संपप्पे' ॥१॥ ति वुधैरिति, तथा च जीवकृतानां प्राग्भवभाविनां कषायाणामनुभागानां च वैचित्र्यमेव तत्तद्विचित्रद्रव्यक्षेत्रकालभावद्वारा वेदनीयाद्यनुभवे हेतुरिति ॥

प्र० १३४५–ननु 'सम्मत्तंमि य लद्धे, पलियपुहुत्तेण सावओ होई'त्यादिना भाष्योक्तेन वचनेन देवेषु नरकेषु लब्धसम्यक्त्वानां गतानां जीवानां का दशा, यतस्तत्र पल्यपृथक्त्वाधिकाया गतायां स्थितौ भवप्रत्ययादेव विरतेरभावात्, अन्यच्च नरभवस्य पल्यपृथक्त्वादिस्थितेरभावात् तद्भवलब्धसम्यक्त्वानां सिद्धिश्च कथं भवेदिति ? चेत्

उ०–सत्यं, सम्यक्त्वकालीनाया स्थिते. पल्यपृथक्त्वाद्यप-

उ०—सर्वथा ज्ञानावरणस्यात्मप्रतिबन्धकस्यापगमे स्वभावरूपं केवलमाविर्भवति, ज्ञात्वा तेन तीर्थरूपस्य श्रुतस्य गणधरप्रतिबोधादिप्रवृत्तयश्चोपजायन्ते, केवलिनः स्वस्य कृतार्थत्वेन साध्यत्वाभावात् औदासीन्य फलमाम्नायते, नातस्तत्त्वतस्तीर्थप्रवृत्त्यादि निवारित तत्त्वज्ञैरिति ॥

प्र० १३४९—ननु पञ्चमानन्तानां प्रतिपातेऽप्यष्टमानन्तानां सिद्धिप्राप्ते कथ दुर्लभतमत्वमाराधनाया धर्मस्येति ? चेत्।

उ०—सत्यम्, येऽष्टमानन्तांशमिता अवापु सिद्धिं तेष्वल्पतमा एवाप्रतिपतिता सन्तो गता सिद्धि सख्यातकालप्रतिपतितादियुतेभ्यो तेभ्योऽत्यल्पास्तदनन्ताश एवाप्रतिपतिता सिद्धा इति यथार्थमेव दुर्लभतमत्वं निरतिचारपारगतत्वस्येति ॥

प्र० १३५०—ननु संज्ञिपञ्चेन्द्रिया मिथ्यादृष्टयः सप्ततिसागरोपमकोटीकोटीस्थितिक कर्म बध्नन्ति, सम्यग्दृष्टयोऽपि यावदपूर्वकरणगुणस्थानक न यान्ति तावदन्त कोटीकोटीसागरोपमस्थितिक कर्म बध्नन्ति, कर्मणा च बद्धानामेष नियमो यदुताबाधाकालेन बाधयन्ति नोदयं यान्तीत्यर्थ, अबाधाकालश्च प्रतिसागरोपमकोटाकोटी वर्षशतरूप, एवं चेह जन्मनि बद्धानां कर्मणामिह जन्मन्युदय कथं भवति ? कथ च चरमदेहत्वं भवतीति ? चेत्।

उ०—सत्यम्, स्वाबाधानन्तरं य उदय कथ्यते स स्वाभाविक उदय, संक्रमोत्कर्षादिभिस्तु प्रागपि भवन्त्युदयादय., अत एव संवेजन्यां कथायां इहभवादिका कथिता चतुर्भङ्गी चरमदेहत्वादि च सभवतीति ॥

प्र० १३५१—ननु 'तन्निसर्गादधिगमाद्वे'ति तत्त्वार्थसूत्रे तच्छब्देन कि वाच्यं ? सम्यग्दर्शनमितिपदं चेत तदनन्तरसूत्र एवासमस्ततयोक्तमिति अनुवर्त्तिष्यते, न चापरं किमप्यत्रानुवर्त्य तच्छब्देन वा पूर्वपरामर्षवाचिना वक्तव्यमस्तीति चेत्।

उ०—सत्यम्, शैल्येषा ह्याचार्यस्य यदनुवृत्त्यर्थ यत्न, अस्ति च न्यायो यदुतानुवर्त्तन्ते नाम विधयः पर तदर्थं यत्नः क्रियमाणो विलोक्यते इति, सम्यग्दर्शनस्य पूर्वगतसूत्रस्थस्यासमस्तस्याप्यनुवृत्त्यर्थ तच्छब्दोपादानं, एवमग्रेऽपि समस्तेष्वपि तच्छब्दाङ्कितसूत्रेषु ज्ञातव्यमिति ॥

प्र० १३५२—ननु कथमत्र 'तन्निसर्गे'तिसूत्रेऽसमासकरणमिति ? चेत्।

शैर्वन्धश्चिरकालीनश्चेति योग्यं बन्धननाम च ॥

प्र० १३५५–ननु सूत्रार्थोभयरूप आगम' कथ्यते, तत्र चार्थपेक्षयाऽऽगमस्य नित्यत्वं सूत्रापेक्षया गणधररचितत्वमागस्य स्वीक्रियते, यदि चैव तर्हि कथ भगवन्तोऽर्हन्त प्ररूपका अर्थस्य? कथ च 'अत्थ भासइ अरिह'त्ति च निर्युक्तिवच ? इति चेत्।

उ०–सत्यम्, अर्थो द्विधा–पदार्थरूप अभिधेयरूपश्च, तत्र लोकादीनां पदार्थानां वाच्यानामकृत्रिमत्वादिना नित्यतेति नित्योऽर्थरूप आगम, पर तेषां लोकनित्यास्तित्वादीनां यन्निरूपणं तदर्थप्रणयनं तच्चार्हद्भिर्भगवद्भिः कृतं तन्मध्यस्थधर्मादिपदार्थापेक्षया सूत्ररूपेण गणधरैर्द्वादशाङ्ग दृब्धमिति न कुत्रापि काप्यनुपपत्तिर्विदुषामिति ॥

प्र० १३५६–ननु भगवतामर्हतां देवत्वमेव केवलं भवति गुरुत्वमपि चेति चेत्।

उ०–पञ्चसु परमेष्ठिषु ये केवला आराध्यास्ते देवतत्त्वरूपा ये तु आराध्या आराधकाश्चेत्युभयरूपास्ते गुरव इति लक्षणं द्वयोरपेक्ष्य भगवन्तोऽर्हन्त सिद्धानामिव केवलं देवत्वमलकुर्वन्ति, अनाराधकत्वाच्च सामायिकोच्चारे 'भदन्ते'ति न कथयन्ति, सिद्धानाश्रित्य तदुच्चारस्त्वाचारार्थमेव, परं 'सत्त्वानां धर्मशास्त्रार्थदेशको गुरुरुच्यते' इति धर्मोपदेशकतामपेक्ष्य गुरुत्वमप्यव्याहतमेव, अत एव स्कन्दकोद्देशादिषु भगवतो महावीरस्य धर्माचार्यत्वं स्पष्टमुद्दिष्टं यत्तत् परमं मान्यमेवेति, तत्त्वपार्थक्यकरणे तु भगवतामर्हतां देवत्वमेव, तद्धि गुरुपदादतिशयेन महदिति महत पदस्य मान्यत्व, किञ्च–तदेव हि जैनत्वं यत् सर्वेऽर्हत्सिद्धा देवा एव इति त एव च देवा इत्युभयथा प्रत्ययावधारण, अन्यथा सर्वे हि आस्तिका देवगुरुधर्मतत्त्ववादिन एवेति ॥

प्र० १३५७–ननु मिश्रे वैक्रियमिश्र कथ नेति ? चेत्।

उ०–'मीसो न कुणइ काल' मितिवचनात् भवान्तरीयं त्वेकमपि तस्य न भवत्येव मिश्रं, तद्भवीयं तु देवनारकयोरपर्याप्तत्वेन मिश्रत्व नरतिरश्चां तु मिश्रस्याल्पकालीनत्वान्मध्यावसायाच्च वैक्रियकरणस्यैवासम्भवस्तत एव च तन्मिश्रमपीति ॥

प्र० १३५८–ननु सत्यप्यम्मडादीनां देशविरतानां शतशो वैक्रिये किं न तेषां वैक्रियो योग' ? इति चेत्।

उ० – स्वलिङ्गविषयमेतद्वैक्रियाद्याभाववच, परमार्थप्रति

गवत् लोकव्यवहारं जीवस्वभाव चानुसृत्येति ज्ञायते, तेन स्पर्शनेतरादितया न दर्शनविभाग' इति वयं, अन्यश्चेद्वेतु स्यात् सुधियां गम्य सोऽपीति ॥

प्र० १३६३—ननु 'चारवार सज्झाय सातवार चैत्यवन्दने'-त्येतस्यातिचारपाठस्य कोऽर्थ' ? इति चेत् ।

उ० – चारवारसज्झाये'त्यत्र वारशब्दो मम वारः मम सुवार इत्यादिवत् वेला अवसरापरपर्यायोऽर्थ, सातवारचैत्यवन्दने'त्यत्र तु वारशब्द आवृत्त्यर्थ, तथा च सप्तशश्चैत्यवन्दनानीत्यर्थोऽस्येति, अतश्च 'चाउक्काल सज्झायस्से'त्यादेर्न वाध इति॥

प्र० १३६४—ननु भरताद्यासु कर्मभूमिषु ये तिर्यक्त्वेऽपि प्रपन्ना देशविरति ते तत्तत्क्षेत्राभिजातऋषभादीनां चतुर्विंशतेर्जिनानां स्तवनमयेन चतुर्विंशतिस्तवेन भवन्तु कृतार्था, परमकर्मभूमिजाना शेपतिर्यग्लोकवासिना देशविरतानां तेषां कथं कृतार्थतेति ? चेत् ।

उ०—प्राक्तावज्जातिस्मरणादिना तादृशां तेषां तद्भवस्वभावात् पूर्वभवक्षेत्रचतुर्विंशतिस्तवेन स्यादेव कृतार्थता, अक्षेत्रकालाश्रितानां चतुर्णामृषभचन्द्राननादीनां स्तवेन तु सर्वेषामपि कृतार्थत्वे न गन्धो विरोधस्येति ॥

प्र० १३६५—ननु किमिति साकारोपयोगानामष्टप्रकारत्वात् साकारोपयोगापरपर्यायस्य ज्ञानस्यावरणान्यष्टधा नोच्यन्ते ? इति चेत् ।

उ०—सत्यम्, नहि स्वरूपेण मत्यादिज्ञानवन्मत्यज्ञानादीनि, सिद्धादिषु तत्सद्भावप्रसङ्गात्, उपरक्तदीपप्रभावत्तानि मत्यज्ञानादीनि मिथ्यात्वप्रभयोपरक्तानीत्यज्ञानान्युच्यन्ते इति ॥

प्र० १३६६—ननु मिथ्यात्विभि· कुदेवादीनां नत्यादीनि यानि क्रियन्ते तानि किंफलानीति ? चेत् ।

उ०—मत्यज्ञानावरणादिक्षयोपशमफलानि, अनेनैव च फलेन तत्कृतग्रन्थारम्भनत्यादीनां फलवत्तावसेयेति ॥

प्र० १३६७—ननु मत्यज्ञानादीन्युपाधिजानि न स्वाभाविकानि तर्हि सामान्येन उपयोगभेदेषु विशेषेण साकारोपयोगभेदेषु मत्यादिवत् स्वतन्त्रतया कथ गण्यन्ते ? इति चेत् ।

उ०—सत्यम्, जीवा ह्युपयोगलक्षणा, न च मिथ्यादृशां मत्यादीनि ज्ञानानि भवन्ति, तद्गतामर्धपुद्गलावर्तादर्वागवश्यं मोक्षसद्भावात्, ततस्तादृशां मिथ्यादृशामुपयोगवैशिष्ट्यार्थं मत्या-

इति कारणकार्यदशामाश्रित्य वन्धहेत्वभावनिर्जरे करणतयोक्ते इति न कश्चित्फले विशेषो द्वयोर्वाक्ययोरस्तीति ॥

प्र० १३७३-ननु कर्माणि यथा वध्यन्ते तथा वेद्यन्ते इति नियम श्रीजैनशासनेऽस्तीति ? चेत् ।

उ० – शृणु, वद्धाना कर्मणामवश्य भोग 'नाभुक्त क्षीयते कर्म' पर कर्मणां द्विधाऽनुभव'-प्रदेशतो रसतश्च, तत्रावश्य प्रदेशतोऽनुभवनीयानि कर्माणि, निन्दादिना तपःप्रभृतिभिश्च यः क्षय कर्मणा कथ्यते स रसोदयापेक्षया, किञ्च–कानिचित्कर्माणि यथा वध्यन्ते तथा वेद्यन्ते, केषाञ्चिद्रसोदय क्षीयते कानिचित्स्वजातीयोत्तरान्यप्रकृतितया सक्राम्यापि प्रवेद्यन्ते, कानिचित् स्थितिरसाभ्यामुत्कृष्य वेद्यन्ते कानिचिदपकृष्यापि वेद्यन्ते इति चतुर्धा कर्मणा कर्म तथाऽतथावद्धमवद्ध वेद्यते इति चतुर्धा वेदनमिति ॥

प्र० १३७४-ननु किमिति सामायिकादिषु करोमीत्यादीन्यस्मच्छब्दोपपदक्रियाकानि दशवैकालिकपाक्षिकसूत्रादिषु तु महाव्रतदण्डकेषु न तथेति? चेत् ।

उ० – सत्यम्, सामायिकसूत्रं गुरुभिरुच्चार्यमाणं केवलं प्रत्याख्यापकतयाऽस्ति, कालिकादिषु तु परस्परालापपूर्वकं, तत्र शिष्य आह–'पढमे भंते ! महव्वए'त्ति, गुरुराह–'पाणाइवायाओ वेरमणं' इति, पुन शिष्य आह–'सव्वं भंते ! पाणाइवायं पच्चक्खामि, गुरुराह – 'से पाणाइवाए'त्यादि, शिष्य आह–'जावजीवाए'इत्यादि ॥

प्र० १३७५-ननु चारित्रस्य जीवता मरणेन च त्यजने को विशेषः ? उभयत्राप्यविरत्यादिकर्मणामुदयागमादिति चेत् ।

उ०–सत्यम्, जीवता त्यागे प्रमादो हेतु विराधन च, मरणे तु तस्मिन् अखण्डाराधना वीर्याचाराचारश्चेति ॥

प्र०–१३७६–ननु जिनोक्तेष्वस्तु वीर्याचार., परमाचार्यादिप्रोक्तेषु वीर्याचाराराधना चरणाराधना च कथमिति ? चेत्।

उ०–आचार्याणां जिनदत्तस्यैव शासनस्य प्रवर्त्तनात् जिनोक्तार्थप्रतिपादकत्वाच्चावश्य तदुक्ताराधनादेव वीर्याचाराराधनं चारित्रस्याखण्डमाराधनं चेति ॥

प्र० १३७७-ननु वेदनीयस्य मोहस्योपशमे च क प्रतिविशेषो ? येन मोहस्योपशम इष्यते नान्यस्य, धर्मश्च तत्रैव अन्यत्र त्वधर्मो हेयता चेति चेत्।

पर्यायाद्याकाल, अपूर्वकरणलब्ध्यात्यवसानानन्तरत्वादेशाज्जिन

त्रापि निकाचितजिननामाऽन्तर्मुहूर्ताधिकसमतिक्रान्तसज्जिननामा यत्र यत्रोत्पद्यते तत्र तत्र तत्तद्देशक्षेत्रकालाद्यनुसारेण पूज्यतास्थानमेव भवति, तत एव च 'उदयक्खयखओवसमोवसमा'-इत्याद्युच्यते, जिनजीवस्तथाभव्यत्वेन त्वनादित एव लोकोत्तमो भवति, परमतीनान्तर्मुहूर्त्तसत्तागतजिननामा तु रूपसौभाग्याद्यवाप्त्योत्तम एव भवतीति, एवं चतुर्दशमहास्वप्नसूचितावतारादि सर्वं जिननामप्रभावोद्भवमेवेति ॥

प्र० १३८२-ननु अबाधाकाल इति कोऽर्थः ? किंच तया कार्यं, तदुत्तर चावश्य किमोग इति ? चेत्।

उ०-शृणु, भवस्य त्रिभागाद्यवशेषे परभवायुषां बन्ध, न च तानि तत्रोदीयन्ते इत्यवश्यमेष्टव्योऽसौ कर्मविपाकानामननुभवकाल इति, स एव कर्मफलपीडारहित कालोऽबाधाकाल, ज्ञानावरणीयादीनां तु स सागरकोटीवर्षशतमानेन हीनतरकर्मबन्धकानामपि तद्भवे उत्तमत्वस्येक्षणादपि सोऽवश्यमेष्टव्य, अबाधोत्तरकाल च तद्भवाद्ययोग्यानां प्रकृतीनां तद्भवयोग्यासु प्रकृतिषु सक्रमो यदि न जातस्तदाऽवश्यमुदय इति

प्र० १३८३-ननु किमिति चतुर्ष्वायुष्केषु नारकाणामेवायु पापरूपमेति ? चेत्।

उ०-देवनरतिरश्चामायुर्वृद्धि कषायशुद्धेः, अस्य तु तद्वृद्धेरिति योग्यैव पापरूपता, अत एव च देवनरतिर्यगायूंषि मुक्त्वा सर्वस्थितिबन्धाः अशुभा इति, प्रशस्ता अपि कषाया अशुभा इति सम्यक्त्वसंयमनिमित्तानामप्याहारकाणां स्थितिबन्धोऽशुभ स्यात्तत्र न विरोध इति ॥

प्र० १३८४-ननु मतिश्रुतयो॰ परस्परं व्यापकताऽस्ति न वा ? यतः श्रीभगवत्यादिव्याख्याग्रन्थेषु 'जत्थ मइनाण तत्थ सुयनाण जत्थ सुयनाणतत्थमयिनाण'मित्येवं श्री नन्दीसूत्रनाम्न उल्लेखेन व्याप्तिकथनात्, श्रीतत्त्वार्थभाष्ये तु श्रुत न मतिविरहितं मतिस्तु श्रुतविरहितेति व्याख्याय व्याप्तिर्निषिद्धा, श्रीनन्दीसूत्रे तु 'जत्थ आभिनिबोहियनाण' मित्याद्युक्त्याऽऽभिनिबोधिकश्रुतयोर्व्याप्तिर्दर्शितेति चेत्।

उ०-शृणु, आभिनिबोधिकशब्दवाच्यं हि मतिज्ञान सम्यग्दृशा, अत एव नन्दीक्रियायामावश्यके चाभिनिबोधिकनाम्ना

ज्ञानान्याश्रित्य प्रमाणभेद ,अनुयोगादिषु प्रमेयान्युद्दिश्येति द्वैविध्य-चातुर्विध्ये। अन्यच्च नन्दीतत्त्वार्थादौ यावज्ज्ञानान्यपेक्ष्य प्रमाणविभाग अनुयोगद्वारादौ अनुयोगमाश्रित्य तद्द्वितीयभेदमुपक्रममाश्रित्य प्रमाणविभाग , तथा च नन्द्याद्युक्तो लोकोत्तरविभागः, अनुयोगद्वारादौ तु अनधिगतलोकोत्तरश्रुतानुयोगान् मुग्धलोकानाश्रित्येति लौकिक स, भवत्येव च श्रोतृविशेषानधिकृत्य व्याख्येयस्वरूपनिरूपणाया भेद , यथैकस्यैव धर्मस्य बालादीन् श्रोतृनपेक्ष्य, अत एव चातिशयज्ञानधारकपुरुषविशेषापेक्षया रिक्तभृतमल्लायामुन्मानभेदेऽपि अनतिशय्यपेक्षया तत्र तद्भेदाभावेन निर्भेदतया श्रीप्रदेशिनृपस्याग्रे श्रीकेशिकुमारगणधरैर्निर्देशोऽकारि, अत एव चतुर्विधत्वस्याप्रामाण्य गणयित्वा भाष्यकारा नयान्तरेण प्रामाण्यमाहु ॥

प्र० १३८८-ननु परमेष्ठिपञ्चकनमस्कृतिषु किमित्यादावर्हन्नमस्कार ? सिद्धा हि सम्पूर्णतया कृतकृत्या, अर्हन्तो न तथा, किञ्च-अर्हतामपि नमस्करणीया सिद्धा इति चेत्।

उ०-न, ज्ञानाद्यात्मगुणानपेक्ष्य द्वयेषामपि सम्पूर्णत्वेन कृतकृत्यत्वात्, नमस्कारश्चार्हद्‌भिश्छाद्मस्थ्य एव विधीयते सिद्धानां, न तीर्थकरनामकर्मफलसिद्धिरूपतीर्थप्रवर्तनकाले इति, किञ्च तीर्थकरातिरिक्ता हि स्वनिःश्रेयसकाम्यया मोक्षमार्गमनुतिष्ठन्ति, भगवन्तोऽर्हन्तस्तु वरबोधिलाभकालादारभ्य जगदुद्धारकाम्ययैवानुतिष्ठन्ति मोक्षमार्ग, ततः प्राप्तमोक्षमार्गाणां त एवादौ नमस्कार्याः, अत एव ऋषभादीनां जिनानां सिद्धत्वेऽपि प्रथमपदेनैव नमस्कार क्रियते, 'अरिहंते कित्तइस्सं चउवीसंपी'त्यादिवचनात् , भगवतां हि प्रव्रज्योपसर्गसहनघातिनाशकेवलाधिगमतीर्थदेशना. सर्वा एव परार्था इति स्पष्ट तत्त्वार्थहारिभद्रीयवृत्तौ, तथा च तेषां सिद्धिप्राप्तिरानुषङ्गिक मोक्षमार्गाचरणफलं मुख्य तु तीर्थप्रवृत्तिद्वारा जगदुद्धार , किञ्च-अन्यत्, यथा जगति प्रमाणानां प्रमेयत्वे सत्यपि प्रमाणातिरिक्तप्रमेयानां प्रमाणाधीनव्यवस्थासिद्धे प्रमाणानां पार्थक्यमादिकथनीयत्व च तथाऽत्राप्यर्हतां सिद्धत्वे सत्यपि तदतिरिक्तानां तेषां तत्प्रामाण्यसिद्धौ प्रामाण्यसिद्धे सिद्धपार्थक्यं तदादिकथनीयत्वं च ज्ञेय,अपिच-जिननामकर्मोदयेन निष्पद्यमानत्वेन जिनानां तन्निक्षेपचतुष्टयं तन्नामादि तस्मिन् जीवेऽवस्थाभेदेन समस्तमेव, सिद्धादिचतुष्टयस्य तु नामादि-

ज्ञानान्याश्रित्य प्रमाणभेद, अनुयोगादिषु प्रमेयान्युद्दिश्येति द्वैविध्य-चातुर्विध्ये। अन्यच्च नन्दीतत्त्वार्थादौ यावज्ज्ञानान्यपेक्ष्य प्रमाणविभाग अनुयोगद्वारादौ अनुयोगमाश्रित्य तद्द्वितीयभेदमुपक्रममाश्रित्य प्रमाणविभाग, तथा च नन्द्याद्युक्तो लोकोत्तरविभाग', अनुयोगद्वारादौ तु अनधिगतलोकोत्तरश्रुतानुयोगान् मुग्धलोकानाश्रित्येति लौकिक स, भवत्येव च श्रोतृविशेषानधिकृत्य व्याख्येयस्वरूपनिरूपणाया भेद, यथैकस्यैव धर्मस्य बालादीन् श्रोतृनपेक्ष्य, अत एव चातिशयज्ञानधारकपुरुषविशेषापेक्षया रिक्तभृतभस्त्रायामनुमानभेदेऽपि अनतिशय्यपेक्षया तत्र तद्भेदाभावेन निर्भेदतया श्रीप्रदेशिनृपस्याग्रे श्रीकेशिकुमारगणधरैर्निर्देशोऽकारि, अत एव चतुर्विधत्वस्याप्रामाण्य गणयित्वा भाष्यकारा नयान्तरेण प्रामाण्यमाहु ॥

प्र० १३८८-ननु परमेष्ठिपञ्चकनमस्कृतिषु किमित्यादावर्हन्नमस्कार ? सिद्धा हि सम्पूर्णतया कृतकृत्या, अर्हन्तो न तथा, किञ्च-अर्हतामपि नमस्करणीया सिद्धा इति चेत्।

उ०-न, ज्ञानाद्यात्मगुणानपेक्ष्य द्वयेषामपि सम्पूर्णत्वेन कृतकृत्यत्वात्, नमस्कारश्चार्हद्भिश्छद्मस्थ एव विधीयते सिद्धाना, न तीर्थकरनामकर्मफलसिद्धिरूपतीर्थप्रवर्तनकाले इति, किञ्च तीर्थकरातिरिक्ता हि स्वनि श्रेयसकाम्यया मोक्षमार्गमनुतिष्ठन्ति, भगवन्तोऽर्हन्तस्तु वरबोधिलाभकालादारभ्य जगदुद्धारकाम्ययैवानुतिष्ठन्ति मोक्षमार्ग, तत' प्राप्तमोक्षमार्गाणां त एवादौ नमस्कार्याः, अत एव ऋषभादीनां जिनानां सिद्धत्वेऽपि प्रथमपदेनैव नमस्कार क्रियते, 'अरिहते कित्तइस्स चउवीसपी'त्यादिवचनात्, भगवतां हि प्रव्रज्योपसर्गसहनघातिनाशकेवलाधिगमतीर्थदेशना' सर्वा एव परार्था इति स्पष्ट तत्त्वार्थहारिभद्रीयवृत्तौ, तथा च तेषां सिद्धिप्राप्तिरानुषङ्गिक मोक्षमार्गाचरणफलं मुख्य तु तीर्थप्रवृत्तिद्वारा जगदुद्धार, किञ्च-अन्यत्, यथा जगति प्रमाणानां प्रमेयत्वे सत्यपि प्रमाणातिरिक्तप्रमेयानां प्रमाणाधीनव्यवस्थासिद्धे प्रमाणानां पार्थक्यमादिकथनीयत्व च तथाऽत्राप्यर्हतां सिद्धत्वे सत्यपि तदतिरिक्तानां तेषां तत्प्रामाण्यसिद्धौ प्रामाण्यसिद्धे सिद्धपार्थक्यं तदादिकथनीयत्व च ज्ञेय, अपिच-जिननामकर्मोदयेन निष्पद्यमानत्वेन जिनानां तन्निक्षेपचतुष्टयं तन्नामादि तस्मिन् जीवेऽवस्थाभेदेन समस्तमेव, सिद्धादिचतुष्टयस्य तु नामादि-

श्रमणसंघ इत्याख्येये मध्यपदलोपाच्चतुर्वर्ण्य, उत्तरपदलोपाद्वा चतुर्वर्णश्रमणसघ इति वर्णयाञ्चक्रुवांस सुकृतचक्रिणो ज्ञापनाय जगत्पूज्यतायां गुणै श्रमणानामिति, श्रमणोपलक्षित· संघ श्रमणसघश्चतुर्वर्णश्चतुष्प्रकार साधुसाध्वीश्रावकश्राविकाभेद्भिन्नत्वेन तस्य तथात्वमिति,केचित् वर्णस्य प्रकारार्थत्वं उपलक्षणत्वं च श्रमणानां विदधतो व्याचख्युर्द्वादशाङ्गयाधारत्वं च तत्र तत्र तत्रभवदाख्यात सामान्यतो योजयन्ति, समुदायेऽपि वाक्यपरिसमाप्ते गर्गा' शत दण्ड्यन्तामितिवद्दर्शनात्,विचार्यधिवारणीमेयतत्॥

प्र० १३९०–ननु शतेऽष्टपञ्चाशेऽपि कर्मप्रकृतीनां न रागद्वेषौ परिगणितौ, भवति चाराध्यता वीतरागाणा वीतरागतयेति, काऽत्र क्षीणा प्रकृतिर्ज्ञेया श्रीमतां तेषां कर्मप्रकृतिष्विति ।

उ०–क्षीणा मोहप्रकृति समूलेति वीतराग सवृत्त उपलक्षितश्च, नयापेक्षया क्रोधमानाभ्यां द्वेष' रागस्तु मायालोभाभ्या, साक्षादपरिगणन, तु तयो पुरुषवेदादिरूपतयापि भावात्, प्रकृतीनां च कासाञ्चित् क्वचित् क्वचिदुभयरूपतयान्यतररूपतया च भावात्, मोहस्य रागद्वेषाभ्यां पार्थक्यं तस्याबोधतारूपमर्थमाश्रित्य,क्षये च ज्ञानदर्शनावरणयो स्यादेव बोधोऽव्यय ,परं स जाते रागव्यये, जातेऽस्मिश्चावश्यं स इति वीतरागाणामाराध्यतोपदेश·, अपरे तावद्भवाभिनन्दिनो निग्रहानुग्रहपरायणतामेवानुमत्य देवानां चक्रुराराधनां, तावेव चाराधनाफलमभीप्सितवन्तो, नचात्रैवं, किन्तु ज्ञानाद्यात्मगुणघातकानां समूलकाषंकषणाद्गुणगणरत्नरत्नाकरा इत्याराध्यास्तच्चरितालम्बनेनानुवर्त्तनं च तद्वाचामभीप्सित श्रेय, एतदेव सत्स्वनन्तेषु गुणेषु जिनवराणामतिशयचतुष्कस्य भावार्हत्तानिबन्धनत्वाख्याने बीजं, रागद्वेषविजयेनात्मस्वरूपार्थितायाः सर्वज्ञत्वेन ज्ञानादिगुणानां माहात्म्यनिबन्धनतायाः शक्रपूज्यत्वेन बहिरङ्गारातिपरमजयालीढाप्राप्तापूर्ववस्तुप्रापकता गुणास्पदत्वस्य वागीशत्वेन यथावस्थितपदार्थसार्थानुसारिवाङ्मयव्याख्यातृत्वस्य मनीषिमनसामावर्जनसमर्थत्वात् ॥

प्र० १३९१–ननु अतिचारा भङ्गश्च कस्य कस्य केषां केषामुदयेनेति, 'सव्वेवि य अइयारा, सजलणाणमुदयओ होंति । मूलच्छेज्ज पुण होइ, बारसण्हं कसायाणं' ॥ १ ॥ त्यस्या गाथायाश्च किं तत्त्वमिति ? ॥

उ०–सावधान' शृणु, अनन्तानां मिश्रीभावे विष्टब्धोदये सम्यक्त्व देशोदयेऽतिचारा सर्वोदये पातरूप मिथ्यात्वं, पुन

